| | | | |
|---|---|---|---|
| २ | यास् | यास्तम् | यास्त |
| ३ | यासम् | यास्व | यास्म |

**॥ आत्मनेपदानि ॥**

| | | | |
|---|---|---|---|
| १ | सीष्ट | सीयास्ताम् | सीरन् |
| २ | सीष्ठास् | सीयास्थाम् | सीध्वम् |
| ३ | सीय | सीवहि | सीमहि |

**आशीर्वादादेः पं किदिति वक्तव्यम् । ३८ ।** ततो गुणाभावः । भूयात् भूयास्ताम् भूयासुः । भूयाः भूयास्ताम् भूयास्त । भूयासम् भूयास्व भूयास्म । सः श्रीमान् भूयात् । भू सीष्ट इति स्थिते ॥ **स्सिसतासीस्यपामिट् । ३९ ।** धातोः परेषां सि स तासी स्यप् इत्येतेषामिडागमो भवति ॥ गुणावादेशौ । षत्वम् । भविषीष्ट भविषीयास्ताम् भविषीरन् । भविषीष्ठाः भविषीयास्थाम् भविषीध्वम् । सीव्यवधानेऽपि ढत्वम् । भविषीढ्वम् । भविषीय भविषीवहि भविषीमहि । हरिभक्तिं भविषीष्ठाः ॥ **श्वस्तने । ४० ।** श्वो आगतेऽह्नि भाविन्यर्थे तादयो भवन्ति ॥ एषां संज्ञा लुट् ॥

**॥ परस्मैपदानि ॥**

| | एकवचनानि । | द्विवचनानि | बहुवचनानि । |
|---|---|---|---|
| १ | ता | तारौ | तारस् |
| २ | तासि | तास्थस् | तास्थ |
| ३ | तास्मि | तास्वस् | तास्मस् |

**॥ आत्मनेपदानि ॥**

| | | | |
|---|---|---|---|
| १ | ता | तारौ | तारस |

| | | | |
|---|---|---|---|
| २ | तासे | तासाथे | ताध्वे |
| ३ | ताहे | तास्वहे | तास्महे |

इङ्गुणावः । भविता भवितारौ भवितारः । भवितासि भवितास्थः भवितास्थ । भवितास्मि भवितास्वः भवितास्मः । श्वस्ते हरिः प्रत्यक्षो भविता । भविता भवितारौ भवितारः । भवितासे भवितासाथे भविताध्वे । भविताहे भवितास्वहे भवितास्महे । श्वो हरिं भवितासे ॥ **त्यादौ भविष्यति स्यप् । ४१ ।** धातोर्भविष्यति काले स्यप् प्रत्ययो भवति तिबादिष्वष्टादशसु परेषु ॥ अस्य संज्ञा लट् ॥ भविष्यति भविष्यतः भविष्यन्ति । भविष्यसि भविष्यथः भविष्यथ । भविष्यामि भविष्यावः भविष्यामः । कल्किर्धर्मप्रवर्तको भविष्यति । भविष्यते भविष्येते भविष्यन्ते । भविष्यसे भविष्येथे भविष्यध्वे । भविष्ये भविष्यावहे भविष्यामहे । सावर्णी राज्यं भविष्यते । **स्यप् क्रियातिक्रमे । ४२ ।** धातोः क्रियाया अतिक्रमे कुतश्चिद्वैगुण्यादनिष्पत्तौ सत्यां दिबादिपरः स्यप्प्रत्ययो भवति भविष्येऽर्थे कचिद्भूतेऽपि ॥ अस्य संज्ञा लङ् । अडागमः । अभविष्यत्-अभविष्यद् अभविष्यताम् अभविष्यन् । अभविष्यः अभविष्यतम् अभविष्यत । अभविष्यम् अभविष्याव अभविष्याम । यदि सुवृष्टिः सुराज्यं चाभविष्यत्तदा सुभिक्षमभविष्यत् । अभविष्यत अभविष्येताम् अभविष्यन्त । अभविष्यथाः अभविष्येथाम् अभविष्यध्वम् । अभविष्ये अभविष्यावहि अभविष्यामहि । यद्यभविष्यत द्रव्यं भवांस्तदा रम्यमभविष्यत ॥ **भूते सिः । ४३ ।** धातोर्भूतमात्रे काले सिः प्रत्ययो भवति दिबादिपरः ॥ अस्य संज्ञा लुङ् ॥ इकारः सेरिति विशेषणार्थः । अभूस् त् इति स्थिते ॥ **दादेः पे । ४४ ।** परस्मैपदे परे अपित् । दाधास्थेण्भूपिबतिभ्यः परस्य सेर्लोपो भवति ।

**शाच्छासाह्वाव्यावेपां युक्। शाच्छासाघ्राधेटो वेति वक्तव्यम्** । ४५ । **भुवः सिलोपो लुग्वाच्यः** । ४६ । लुकि न तन्निमित्तम् । ( वृ० १ प्र० ६ सू० ९९ ) तेन गुणवृद्धयो न । अभूत् अभूताम् ॥ **भुवः सिलोपे स्वरे वुग्वक्तव्यः** । ४७ । अभूवन् । अभूः अभूतम् अभूत । अभूवम् अभूव अभूम । अभूद्वृष्टिः । आत्मनेपदे । सिः इट् । गुणावौ षत्वं ष्टुत्वं अट् । अभविष्ट अभविषाताम् ॥ **अतोऽन्तोऽदनतः** । ४८ । आत् आत्मनेपदस्यान्त इत्येतस्याद्भवति अकारादुत्तरस्य न भवति ॥ अभविषत । अभविष्ठाः अभविषाथाम् ॥ **ध्वे च सेर्लोपः** । ४९ । ध्वे परे सेर्लोपो भवति ॥ वा सस्य द इति केचित् । अभविध्वम्-अभविढ्वम् । अभविषि अभविष्वहि अभविष्महि । देवदत्तो राज्यमभविष्ट ॥ **माङि लुङेव वक्तव्यः** । ५० । सर्वलकारापवादः ॥ **मेटः** । ५१ । माशब्दे प्रयुज्यमाने अटो लोपो भवति ॥ मा हर्यभक्तो भवान् भूत् ॥ **स्मयोगे भूतार्थता वक्तव्या** । ५२ । **मास्मयोगे लङ् च** । ५३ । मास्म भवत् । मा स्म भूत् । चिती संज्ञाने । ईकार ईदित्कार्यार्थः । पूर्ववत्तिबादयः । अप् कर्तरि ( प्र० १ सू० १० ) ॥ **उपधाया लघोः** । ५४ । धातोरुपधाया लघोर्नामिनो गुणो भवति ॥ चेतति चेततः चेतन्ति । १ । चेतेत् चेतेताम् चेतेयुः । २ । चेततु-चेततात् चेतताम् चेतन्तु । ३ । अचेतत् अचेतताम् अचेतन् । ४ । द्वित्वम् । चिचेत । कित्वाद्गुणाभावः । चिचिततुः चिचितुः । चिचेतिथ चिचितथुः चिचित । चिचेत चिचितिव चिचितिम । ५ । कित्वाद्गुणाभावः । चित्यात् चित्यास्ताम् चित्यासुः । ६ । चेतिता चेतितारौ चेतितारः । ७ । चेतिष्यति चेतिष्यतः चेतिष्यन्ति । ८ । अचेतिष्यत् अचेतिष्यताम् अचेतिष्यन् । ९ । चित्

सित् इति स्थिते । सिसता ( प्र० १ सू० ३९ ) इतीट् ॥ **सेः । ५५ ।** सिशब्दात्परयोर्दिस्योरिडागमो भवति ॥ **इट ईटि । ५६ ।** इट उत्तरस्य सेर्लोपो भवति ईटि परे ॥ अचेतीत् अचेतिष्टाम् ॥ **स्याविदः ५७** सेराकारान्ताद्विदश्चोत्तरस्यान उस् भवति ॥ अचेतिषुः । अचेतीः अचेतिष्टम् अचेतिष्ट । अचेतिषम् अचेतिष्व अचेतिष्म । च्युतिर् आसेचने । इर्अनुबन्ध इरितो वेति विशेषणार्थः । उच्चारितप्रध्वंसो ह्यनुबन्धः । च्योतति। च्योतेत् । च्योततु । अच्योतत् । च्युत् णप् द्वित्वम् ॥ **पूर्वस्य हसादिः शेषः । ५८ ।** पूर्वस्यादिर्हसः शिष्यते अन्यो लुप्यते । चुच्योत चुच्युततुः चुच्युतुः ।चुच्योतिथ चुच्यतथुः चुच्युत । चुच्योत चुच्युतिव चुच्युतिम । च्युत्यात्।च्योतिता । च्योतिष्यति । अच्योतिष्यत् । अच्योतीत् अच्योतिष्टाम् अच्योतिषुः । अच्योतीः अच्योतिष्टम् अच्योतिष्ट। अच्योतिषम् अच्योतिष्व अच्योतिष्म ॥ **इरितो वा । ५९ ।** इरितो धातोर्वा ङः प्रत्ययोभवति दिबादिपरः परस्मैपदे ॥ सेरपवादः । ङकारो गुणप्रतिषेधार्थः । अच्युतत् अच्युतताम् अच्युतन् । अच्युतः अच्युततम् अच्युतत। अच्युतम् अच्युताव अच्युताम । श्च्युतिर् क्षरणे । श्च्योतति । श्च्योतेत् । श्च्योततु । अश्च्योतत् । द्वित्वम् ॥ **शसात् खपाः । ६० ।** द्विर्वचने कृते यत्पूर्वरूपं तस्य शसादुत्तराः खपाः शिष्यन्ते न शसाः ॥ इति चकारशेषः । चुश्च्योत चुश्च्युततुः चुश्च्युतुः । श्च्युत्यात् ॥ श्च्योतिता । श्च्योतिष्यति । अश्च्योतिष्यत् । अश्च्युतत् । अश्च्योतीत् । मन्थ विलोडने । मन्थति । मन्थेत् । मन्थतु । अमन्थत् । ममन्थ ॥ **नो लोपः । ६१ ।** धातोरुपधाभूतस्य नकारस्य लोपो भवति किति ङिति च परे ॥ इत्युपधानकारलोपे प्राप्ते ॥ **ऋसंयोगात् णादेरकित्वं वाच्यम् । ६२ ।** तेन नलोपाभावः ।

ममन्थतुः ममन्थुः । ममन्थिथ ममन्थथुः ममन्थ । ममन्थ ममन्थिव ममन्थिम ॥ **केचित्संयोगाद्वेति वक्तव्यम् । ६३ ।** ममथतुः ममथुः । नो लोपः ( प्र० १ सू० ६१ ) मथ्यात् । मन्थिता । मन्थिष्यति । अमन्थिष्यत् । अमन्थीत् अमन्थिष्टाम् अमन्थिषुः । पुथि लुथि मथि कुथि हिंसासंक्लेशनयोः ॥ **इदितो नुम् । ६४ ।** इदितो धातोर्नुमागमो भवति ॥ कुन्थति । कुन्थेत् । कुन्थतु । अकुन्थत् । द्वित्वम् ॥ **कुहोश्चुः । ६५ ।** पूर्वसंबन्धिनोः कवर्गहकारयोश्चुत्वं भवति ॥ वर्गचतुर्थो हस्य सवर्णः । चुकुन्थ चुकुन्थतुः चुकुन्थुः । चुकुन्थिथ चुकुन्थथुः चुकुन्थ । चुकुन्थ चुकुन्थिव चुकुन्थिम । लघूपधत्वाभावादगुणः ॥ **इदितो नलोपाभावो वाच्यः । ६६ ।** कुन्थ्यात् । कुन्थिता । कुन्थिष्यति । अकुन्थिष्यत् । अकुन्थीत् अकुन्थिष्टाम् अकुन्थिषुः । षिधु गत्याम् । उकार उच्चारणार्थः ॥ **आदेः ष्णः स्नः । ६७ ।** षोपदेशस्य णोपदेशस्य च धातोरादौ वर्तमानयोः षकारणकारयोः सकारनकारौ भवतः ॥

**सेक्सृप्सृस्तृसृज्स्तृस्त्यान्येदन्त्याजन्तसादयः ॥**

**एकाचः षोपदेशाःष्वक्स्विद्स्वद्स्वञ्ज्स्वप्स्मिङः । १ ।**

सेक्ट गतौ । सृप्लृ गतौ । सृ गतौ । स्तॄ आच्छादने । सृज् विसर्गे । स्तृ छादने । स्त्यै ष्ट्यै शब्दसंघातयोः । एभ्योऽन्ये दन्त्याजन्तसादयः एकाचः षोपदेशाः । दन्ते भवः दन्त्यः दन्त्यश्च अच्च दन्त्याचौ तौ अन्तौ यस्य स दन्त्याजन्तः स चासौ सश्च दन्त्याजन्तसः स आदिर्येषां ते दन्त्याजन्तसादयः । दन्त्यः केवलदन्त्यः न तु दन्तोष्ठजोऽपि ष्वष्कादीनां पृथग्ग्रहणात् । ष्वष्क गतौ । ञिष्विदा गात्रप्रक्षरणे । स्वद् आस्वादने । स्वञ्ज् परिष्वङ्गे । ञिष्वप् शये । स्मिङ ईषद्धसने । एते षोपदेशाः । णो-

पदेशास्तु नर्द्नाटिनाथ्नाधृनन्द्नक्कनॄनृतः ॥ नर्द गतौ । नट नर्तने । नाथृ नाधृ याच्ञोपतापैश्वर्याशीष्षु । टुनदि समृद्धौ । नक्क नाशने । नॄ नये । नृती गात्रविक्षेपे । एभ्योऽन्ये णोपदेशाः ॥

**नकारजावनुस्वारपञ्चमौ झलि धातुषु ॥**

**सकारजः शकारश्च षाट्टवर्गस्तवर्गजः ॥ २ ॥**

**नामधातुष्ठ्यैष्वष्कष्ठिवां षः सो नेति वाच्यम् ।६८।**

गुणः । सेधति । निपूर्वः ॥ **प्रादेश्च तथा तौ सुनगाम् । ६९ ।** प्रादेरुपसर्गात्परेषां स्वादीनां नमादीनां च धातूनां सकारनकारयोस्तौ पूर्वमभिनावेव षकारणकारौ भवतः षत्वणत्वनिमित्ते सति ॥ निषेधति । सेधेत् । सेधतु । अड्व्यवधानेऽपि षत्वम् । न्यषेधत् । द्वित्वव्यवधानेऽपि षत्वम् । निषिषेध । सिषिधतुः सिषिधुः । सिषेधिथ । सिध्यात् । सेधिता । सेधिष्यति । असेधिष्यत् । असेधीत् असेधीष्टाम् असेधिषुः । षिधू शास्त्रे माङ्गल्ये च । ऊकार इड्विकल्पार्थः । सेधति । सेधेत् । सेधतु । असेधत् । सिषेध । सिध्यात् ॥ **ऊदितो वा । ७० ।** ऊदितो धातोः परस्य वसादेरिड्वा भवति ॥ **स्वृसूतिसूयतिधूञ्रधादीनामिड्वा वक्तव्यः । ७१ ।** स्वृ शब्दे । षूङ् प्राणिगर्भविमोचने । षूङ् प्रसवे । धूञ् कम्पने । रध् हिंसायाम् । नश् अदर्शने । तृप् प्रीणने । तृप हर्षविमोचनयोः । द्रुह जिघांसायाम् । मुह वैचित्ये । ष्णुह उद्गिरणे । ष्णिह प्रीतौ । एते रधादयः । सेधिता । पक्षे ॥ **तथोर्धः । ७२ ।** दधातिं विना झभान्ताद्धातोः परयोस्तकारथकारयोर्धकारादेशो भवति ॥ झबे जबाः ( वृ० १ प्र० २ सू० ३ ) सेद्धा । सेधिष्यति–सेत्स्यति । असेधिष्यत् असेत्स्यत् । असेधीत् असेधिष्टाम् असेधिषुः । इडभावे ॥ **अ-**

**निटो नामिवतः । ७३ ।** नामिवतोऽनिटो धातोः परस्मैपदे परे सिप्रत्यये वृद्धिर्भवति ॥ चपत्वम् । सेः ( प्र० १ सू० ९९ ) असैत्सीत् असैद्धाम् ॥ **प्रत्ययलोपे प्रत्ययलक्षणं कार्यं भवति । ७४ । झसात् । ७५ ।** झसादुत्तरस्य सेर्लोपो भवति झसे परे ॥ असैत्सुः । असैत्सीः असैद्धम् असैद्ध । असैत्सम् असैत्स्व असैत्स्म । खद स्थैर्ये हिंसायां च । खदति । खदेत् । खदतु । अखदत् ॥ **अत उपधायाः । ७६ ।** धातोरुपधाया अकारस्य वृद्धिर्भवति ञिति णिति च परे ॥ चुत्वम् । चखाद चखदतुः चखदुः । चखदिथ चखदथुः चखद ॥ **णलुत्तमो वा णिद्वक्तव्यः । ७७ ।** चखाद-चखद चखदिव चखदिम । खद्यात् । खदिता । खदिष्यति । अखदिष्यत् ॥ **णित्पे । ७८ ।** परस्मैपदे परे सिर्णिद्भवति ॥ अत उपधायाः ( प्र० १ सू० ७६ ) इति वृद्धिः । अखादीत् अखादिष्टाम् अखादिषुः ॥ **हसादेर्लघ्वकारोपधस्य वा वृद्धिः सेटि सौ वाच्या । ७९ ।** अखदीत् । गद् व्यक्तायां वाचि । गदति ॥ **उपसर्गस्थान्निमित्तान्नेर्गदादौ णत्वं वाच्यम् । ८० ।** गद् नद् पत् पद् स्था अपित् दा धा मा सो हन् या वा द्रा प्सा वप् वह् चि शम् दिह् एते गदादयः । गद् व्यक्तायां वाचि । नद् अव्यक्ते शब्दे । पत्लृ पतने । पद् गतौ । ष्ठा गतिनिवृत्तौ । डुदाञ् दाने । डुधाञ् धारणपोषणयोः । माङ् माने । षोऽन्तकर्मणि । हन् हिंसागत्योः । या प्रापणे । वा गतिगन्धनयोः । द्रा कुत्सायां गतौ च । प्सा भक्षणे । डुवप् बीजतन्तुसन्ताने । वह प्रापणे । चिञ् चयने । शम् उपशमे । दिह उपचये । प्रणिगदति । गदेत् । गदतु । अगदत् । कुहोश्चुः ( प्र० १ सू० ६९ ) । ५ जगदतुः जगदुः । जगदिथ जगदथुः जगद । गद्यात् । गदिता । गदि-

ष्यति । अगदिष्यत् । अगादीत्-अगदीत् । रद विलेखने । रदति । रदेत् । रदतु । अरदत् । रराद ॥ **लोपः पचां किल्ये चास्य । ८१ ।** पचादीनामनादेशादीनां किति णादौ सति पूर्वस्य लोपः । असंयुक्तहसयोर्मध्यस्थस्याकारस्यैकारः ॥ रेदतुः रेदुः ॥ **सेटि थपि एत्वपूर्वलोपौ वक्तव्यौ । ८२ ।** रेदिथ रेदथुः रेद । रराद-ररद रेदिव रेदिम । रद्यात् । रदिता । रदिष्यति । अरदिष्यत् । अरादीत् अरादिष्टाम् अरादिषुः । अरदीत् । णद् अव्यक्ते शब्दे । आदेः ष्णः स्नः ( प्र० १ सू० ६७ ) नदति । नदेत् । नदतु । अनदत् । प्रपूर्वः । प्रादेश्च ( प्र० १ सू० ६९ ) इति णत्वम् । प्रणदति । गदादित्वात् प्रणिनदति । ननाद नेदतुः नेदुः । नेदिथ नेदथुः नेद । ननाद-ननद नेदिव नेदिम । नद्यात् । नदिता । नदिष्यति । अनदिष्यत् । अनादीत् । अनादिष्टाम् अनादिषुः । अनदीत् अनदिष्टाम् । अर्द गतौ याचने च । अर्दति । अर्देत् । अर्दतु । आर्दत् । द्वित्वे कृते । आभ्वोर्णादौ ( प्र० १ सू० २१ ) आ अर्द इति स्थिते ॥ **नुगशाम् । ८३ ।** अश्नोतेर्ऋकारादिधातूनां संयोगान्ताकारादिधातूनां च पूर्वस्य नुमागमो भवति णादौ सति ॥ आनर्द आनर्दतुः आनर्दुः । आनर्दिथ आनर्दथुः आनर्द । आनर्द आनर्दिव आनर्दिम । अर्द्यात् । अर्दिता । अर्दिष्यति । आर्दिष्यत् । आर्दीत् आर्दिष्टाम् आर्दिषुः । इदि परमैश्वर्ये । इन्दति । इन्देत् । इन्दतु ॥ **स्वरादेः । ८४ ।** स्वरादेर्धातोर्द्वितीयो अडागमो भवति दिबादौ परे ॥ अइए ( वृ० १ प्र० २ सू० ११ ) एऐऐ ( वृ० १ प्र० २ सू० १२ ) ऐन्दत् । इन्द् णप् इति स्थिते ॥ **कासादिप्रत्ययादाम्क्वअस्भूपरः ।८५।** कास्आस्दय्अय्नाम्यादिगुरुमद्धात्वनेकस्वरधातुभ्यः प्रत्ययान्ताच्च णवादौ परे आम् प्रत्ययो

## ॥ अथानिट्कारिकाः ॥

अनिट्स्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः ॥ अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रियावपि ॥ १ ॥ गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णुवः ॥ इति स्वरान्ता निपुणैः समुच्चितास्ततो हसान्तानपि सन्निबोधत ॥ २ ॥ शकिस्तु कान्तेष्वनिडेक इष्यते घसिश्च सान्तेषु वसिः प्रसारणी ॥ रभिश्च भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥ ३ ॥ यमिर्यमान्तेष्वनिडेक इष्यते रमिर्दिवादावपि पठ्यते मनिः ॥ नमिश्चतुर्थो हनिरेव पञ्चमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ४ ॥ दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ॥ इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥ ५ ॥ दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ॥ लिशिं च शान्ताननिटः पुराणाः पठन्ति पाठेषु दशैव नेतरान् ॥ ६ ॥ रुधिः सराधि युधिबन्धिसाधयः क्रुधिः क्षुधिः शुध्यतिबुध्यती व्यधिः ॥ इमे तु धान्ता दश चानिटो मतास्ततः परं सिध्यतिरेव नेतरे ॥ ७ ॥ शिषिं पिषिं शुष्यतिपुष्यती त्विषिं श्लिषिं विषिं तुष्यतिदुष्यती द्वि-

**षिम् ॥ इमान्दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान्कृषिकर्षती तथा ॥ ८ ॥ तपिं तिपिं चापिमथो वपिं स्वपिं लुपिं लिपिं तृप्यतिदृप्यती सृपिम् ॥ स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश ॥ ९ ॥ अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्यतिपद्यतिखिदीन् । तुदिं नुदिं विद्यतिविन्द इत्यपि प्रतीहि दान्तान् दश पञ्च चानिटः । १० । पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्निजिं सिचिं मुचिभजिभञ्जिभृज्जतीन् ॥ त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं स्वजिं सृजिमृजी विद्ध्यनिट्स्वरान् ॥ ११ ॥**

**॥ इत्यनिट्कारिकाः ॥**

पता-अजिता । वेष्यति-अजिष्यति । आजिष्यत्-अवेष्यत् । आजीत् । धातोर्नामिनः ( प्र० १ सू० ८८ ) सेः ( प्र० १ सू० ९९ ) अवैपीत् । ष्टुत्वम् । अवैष्टाम् अवैपुः । क्षि क्षये । क्षयति । क्षयेत् । क्षयतु । अक्षयत् । चिक्षाय । नुधातोः ( प्र० १ सू० ९९ ) चिक्षियतुः ॥ **य्वे । ९८ ।** अनपि यकारे पूर्वस्य दीर्घो भवति । क्षीयात् । क्षेता । क्षेष्यति । अक्षेष्यत् । धातोर्नामिनः ( प्र० १ सू० ८८ ) । अक्षैषीत् अक्षैष्टाम् अक्षैपुः । कटे वर्षावरणयोः । कटति । कटेत् । कटतु । अकटत् । चकाट ॥

**ह्म्यन्तक्षणश्वसिजागृहसादिवर्जं सेटि सौ न वृद्धिः ९९** हसादय एकारेतः । अकटीत् अकटिष्टाम् अकटिषुः । गुपू रक्षणे । **आयः । १०० ।** गुपूधूपविच्छिपणिपनिभ्यः स्वार्थे आयः प्रत्ययो भवति ॥

अनपि वा । उपधाया गुणः ॥ **स धातु । १०१ ।** स यङादिप्रत्ययान्तः शब्दो धातुसंज्ञो भवति ॥ धातुत्वात्तिवादयः । गोपायति । गोपायेत् । गोपायतु । अगोपायत् । कासादिप्रत्ययादाम् ( प्र० १ सू० ८९ ) गोपायाञ्चकार । गोपायामास । गोपायांबभूव । जुगोप ॥ **यतः । १०२ ।** यकारस्याकारस्य च लोपो भवत्यनपि ॥ गोपाय्यात्-गुप्यात् । गोपायिता गोपिता । ऊदितो वा ( प्र० १ सू० ६७ ) गोप्ता । गोपायिष्यति-गोपिष्यति-गोप्स्यति । अगोपायिष्यत् अगोपिष्यत् । अगोप्स्यत् । अगोपायीत्-अगोपीत् । अनिटो नामिवतः ( प्र० १ सू० ७३ ) अगौप्सीत् । झसात् ( प्र० १ सू० ७९ ) अगौप्ताम् । एवं धूप् सन्तापे । धूपायति । धूपायाञ्चकार । धूपायामास । धूपायांबभूव । दुधूप । दीर्घोपधत्वान्न गुणः । तप सन्तापे । तपति । तपेत् । तपतु । अतपत् । तताप-तेपतुः तेपुः । तेपिथ ॥ **अत्वतो नित्यानिटस्थपो वेट् । १०३ ।** ततप्थ । तप्यात् । तप्ता । तप्स्यति । अतप्स्यत् । अताप्सीत् । क्रमु पादविक्षेपे ॥ **क्रमुभ्रमुत्रसित्रुटिलष्भ्राशृभ्लाशो वा यः प्रत्ययो वक्तव्यः । १०४ ।** चतुर्षु । क्राम्यति ॥ **क्रमः पे चतुर्षु दीर्घता वक्तव्या । १०५ ।** क्रामति । क्राम्येत् क्रामेत् । क्राम्यतु क्रामतु । अक्राम्यत् अक्रामत् । चक्राम । क्रम्यात् । क्रमिता । क्रमिष्यति । अक्रमिष्यत् । अक्रमीत् । यम उपरमे ॥ **गमां छः । १०६ ।** गम्यमूइषूणां छो भवत्यपि ॥ यच्छति । यच्छेत् । यच्छतु । अयच्छत् । ययाम येमतुः येमुः । येमिथ-ययन्थ । यम्यात् । यन्ता । यंस्यति । अयंस्यत् ॥ **आदन्तानां यमिरमिनमीनां सेरिट् सक् च पे वक्तव्यौ । १०७ ।** अयंसीत् अयंसिष्टाम् अयंसिषुः । णमु प्रह्वत्वे शब्दे च । नमति । नमेत्

नमतु । अनमत् । ननाम नेमतुः नेमुः । नेमिथ-ननन्थ । नम्यात् । नन्ता नंस्यति । अनंस्यत् । अनंसीत् अनंसिष्टाम् अनंसिषुः । गम्लृ गतौ । लृकारो लित्कार्यार्थः । गच्छति । गच्छेत् । गच्छतु । अगच्छत् । जगाम ॥ **गमां स्वरे । १०८ ।** गम् हन् जन् खन् घस् एतेषामुपधाया लोपो भवति क्ङित्यङे स्वरे ॥ जग्मतुः जग्मुः जगमिथ जगन्थ । गम्यात् । गन्ता ॥ **हन्नृतः स्यपः । १०९ ।** हन्तेर्ऋकारान्तात्स्यप इडागमो भवति । गमेश्च पे ॥ गमिष्यति । अगमिष्यत् ॥ **लित्पुषादेर्ङः । ११० ।** लितो धातोः पुषादेर्द्युतादेश्च ङप्रत्ययो भवति दिवादौ परस्मैपदे ॥ सेरपवादः ॥ अङे इत्युक्तेर्नोपधालोपः ॥ अगमत् अगमताम् अगमन् ॥ इषु इच्छायाम् । इच्छति । इच्छेत् । इच्छतु । ऐच्छत् । इयेष ईषतुः ईषुः । इयेषिथ । इष्यात् ॥ **इषुसहलुभरिषरुषाम्नपि तस्येड्वा वक्तव्यः ।१११।** एषिता-एष्टा । एषिष्यति । ऐषिष्यत् । ऐषीत् ऐषिष्टाम् ऐषिषुः ॥ ञिफला विशरणे । फलति । फलेत् । फलतु । अफलत् । पफाल ॥ आदेशादित्वेनैत्वपूर्वलोपनिषेधे प्राप्ते ॥ **तॄफलभजत्रपां किति णादौ सेटि थपि चैत्वपूर्वलोपौ वक्तव्यौ । ११२ ।** फेलतुः फेलुः फेलिथ । फल्यात् । फलिता । फलिष्यति । अफलिष्यत् । लृत्वकारोपधत्वेन वृद्धिविकल्पे प्राप्ते ॥ **लान्तस्याकारस्य सौ नित्यं वृद्धिर्वाच्या ।११३।** अफालीत् । जि जये । जयति । जयेत् । जयतु । अजयत् ॥ **सपरोक्षयोर्जेर्गिः । ११४।** सप्रत्यये परोक्षे च जिजय इति धातोर्गिरादेशो भवति ॥ जिगाय जिग्यतुः जिग्युः जिगयिथ-जिगेथ । जीयात् । जेता । जेष्यति । अजेष्यत् । अजैषीत् अजैष्टाम् अजैषुः । कृष् विलेखने । कर्षति । कर्षेत् । कर्षतु । अकर्षत् । चकर्ष । उपधाया लघोः (प्र० १ सू० ९४) चकृषतुः च-

कृपुः चकर्पिथ । कृप्यात् । गुणे कृते ॥ **रारो झसे दृशाम् । ११५ ।** दृश्सृज्कृप्मृश्तृप्दृप्सृपां झसे परे अरो रो भवति ॥ रार इति तन्त्रोपात्तम् । तेन रा आरः र अरः । "सकृदुच्चरितमनेकोपकारकं तन्त्रम्।" ष्टुत्वम् । क्रष्टा ॥ **कृषादीनां रो वा वक्तव्यः । ११६ ।** कर्ष्टा । रारो झसे दृशाम् ( प्र० १ सू० ११५ )॥ **षढोः कः से । ११७ ।** धातोः षकारढकारयोः कत्वं भवति सकारे परे ॥ किलात्पः सः कृतस्य ( वृ० १ प्र० ६ सू० २१ ) कषसंयोगे क्षः ( वृ० १ प्र० ९ सू० १० ) क्रक्ष्यति-कर्क्ष्यति । अक्रक्ष्यत्-अकर्क्ष्यत्-अक्राक्षीत् । अनिटो नामिवतः ( प्र० १ सू० ७३ ) अकार्क्षीत् ॥ **कृषादीनां वा सिर्वक्तव्यः । ११८ ।** कृष् स्पृश् मृष् तृप् दृप् एते कृषादयः । तत्पक्षे । **हशषान्तात्सक् । ११९ ।** हकारान्तात् शकारान्तात् षकारान्ताच्च नाम्युपधादविद्यमानेटो दिवादौ परे सक्प्रत्ययो भवति दृशं वर्जयित्वा ॥ सेरपवादः ॥ अकृक्षत्-अकृक्षताम् अकृक्षन् । रुष् हिंसायाम् । उपधाया लघोः ( प्र० १ सू० ९४ ) रोषति । रोषेत् । रोषतु । अरोषत् । रुरोप रुरुषतुः रुरुषुः रुरोषिथ । रुष्यात् रोषिता रोष्टा । रोषिष्यति । अरोषिष्यत् । अरोषीत् । उष् दाहे । ओषति । ओषेत् । ओषतु । औषत् ॥ **उषविद्जागृणामाम्वा वक्तव्यः । १२० ।** उषाञ्चकार-उवोष उवोषिथ । उष्यात् । उषिता । उषिष्यति । औषिष्यत् । औषीत् । मिह सेचने । मेहति । मेहेत् । मेहतु । अमेहत् । मिमेह मिमिहतुः मिमिहुः मिमेहिथ । मिह्यात् । होढः ( वृ० १ प्र० ९ सू० ११ ) तथोर्धः । ( प्र० १ सू० ७२ ) ष्टुत्वम् ॥ **ढि ढो लोपो दीर्घश्च । १२१ ।** ढकारस्य ढकारे परे लोपो भवति पूर्वस्य च दीर्घः ॥ मेढा ।

मेक्ष्यति । अमेक्ष्यत् । हशषान्तात् सक् ( प्र० १ सू० ११९ ) होढः ( वृ० १ प्र० ९ सू० ११ ) षढोः कः से ( प्र० १ सू० ११७ ) अमिक्षत् अमिक्षताम् अमिक्षन् । दह भस्मीकरणे । दहति । दहेत् । दहतु । अदहत् । ददाह देहतुः देहुः देहिथ-ददग्ध । दह्यात् । दग्धा । दादेर्घः ( वृ० १ प्र० ९ सू० ६ ) आदिजबानां झभान्तस्य झभाः स्ध्वोः ( वृ० १ प्र० ९ सू० ७ ) खसे चपाः ( वृ० १ प्र० ४ सू० १८ ) किलात्पः सः कृतस्य ( वृ० १ प्र० ६ सू० २१ ) कषसंयोगे क्षः ( वृ० १ प्र० ९ सू० १० ) धक्ष्यति । अधक्ष्यत् । अधाक्षीत् । झसात् ( प्र० १ सू० ७९ ) अदाग्धाम् अधाक्षुः । ग्लै म्लै हर्षक्षये । आयादेशः । ग्लायति । ग्लायेत् । ग्लायतु । अग्लायत् ॥ **सन्ध्यक्षराणामा । १२२ ।** सन्ध्यक्षराणां धातूनामात्वं भवति अनपि विषये ॥ णप् । द्विश्च ( प्र० १ सू० २९ ) ह्रस्वः ( प्र० १ सू० ३२ ) पूर्वस्य हसादिः शेषः ( प्र० १ सू० ९८ ) कुहोश्चुः ( प्र० १ सू० ६९ ) ॥ **आतो णप् डौ । १२३ ।** आकारान्ताद्धातोः परो णप् डौ भवति ॥ टिलोपः । जग्लौ ॥ **आतोऽनपि । १२४ ।** धातोराकारस्य लोपो भवति अनपि किति ङिति स्वरे सेटि थपि च ॥ जग्लतुः जग्लुः । जग्लिथ जग्लाथ जग्लथुः जग्ल । जग्लौ जग्लिव जग्लिम ॥ **संयोगादेरादन्तस्य किति यादादावेकारो वा वक्तव्यः । १२५ ।** ग्लायात् ग्लेयात् । ग्लाता । ग्लास्यति । अग्लास्यत् । अग्लासीत् अग्लासिष्टाम् अग्लासिषुः । गै रै कै शब्दे । गायति । गायेत् । गायतु । अगायत् । जगौ जगतुः जगुः ॥ **दादेरे । १२६ ।** अपित्दाधामागैहाक्पिबसोस्थानामाकारस्यैकारो भवति आशीर्वादादौ परस्मैपदे परे ॥ गेयात् ।

गाता । गास्यति । अगास्यत् । अगासीत् अगासिष्टाम् अगासिषुः । ष्ठै शब्दसंघातयोः । सत्वनिषेधः । ष्ठायति । ष्ठायेत् । ष्ठायतु । अष्ठायत् । सन्ध्यक्षराणामा ( प्र० १ सू० १२२ ) शसात्खपाः ( प्र० १ सू० ६० ) षाट्टवर्गस्तवर्गज इति षकारे गते तकार एव । तष्ठौ । ष्ठायात् ष्ठेयात् । ष्ठाता । ष्ठास्यति । अष्ठास्यत् । अष्ठासीत् । दैप् शोधने । दायति । दायेत् । दायतु । अदायत् । ददौ । पित्त्वादेकाराभावः । दायात् । दाता । दास्यति । अदास्यत् । अदासीत् अदासिष्टाम् अदासिषुः । पित्त्वात्सिलोपाभावः इत्यादि । धेट् पाने । ट ईबर्थः । धयति । धयेत् । धयतु । अधयत् । दधौ । धेयात् । धाता । धास्यति । अधास्यत् । वा सिलोपः । अधासीत् अधासिष्टाम् अधासिषुः । अधात् अधाताम् । स्याविदः (प्र० १ सू० ९७)॥ **उस्यालोपः । १२७ ।** उसि परे धातोराकारस्य लोपो भवति ॥ अधुः । धेटः सेरङ् । धातोर्द्वित्वं वेति केचित् ॥ **आतोऽनपि । १२८ ।** धातोराकारस्य लोपो भवति अनपि किति ङिति स्वरे सेटि थपि च ॥ अदधत् अदधताम् अदधन् । दृशिर् प्रेक्षणे ॥ **दृशादेः पश्यादिः । १२९ ।** दृशादेर्धातोः पश्यादिरादेशो भवति चतुर्षु परेषु ॥ दृश् ऋ सृ शद सद पा घ्रा ध्मा स्था म्ना दाण् एते दृशादयः । पश्य ऋच्छ धौ शीय सीद पिब जिघ्र धम तिष्ठ मन यच्छ एते पश्यादयः । पश्यति । पश्येत् । पश्यतु । अपश्यत् । ददर्श ददृशतुः ददृशुः । सृजिदृशोस्थपो वेट् । ददर्शिथ । गुणः ( प्र० १ सू० ११ ) रारो झसे दृशाम् ( प्र० १ सू० ११९ ) षत्वम् । ष्टुत्वम् । दद्रष्ट ददृशथुः ददृश । ददर्श ददृशिव ददृशिम । दृश्यात् । द्रष्टा द्रक्ष्यति । अद्रक्ष्यत् । अत उपधायाः ( प्र० १ सू० ७६ ) अद्राक्षीत् । झसात् । ( प्र० १

सू० ७९ ) ष्टुत्वम् । अद्राष्टाम् अद्राक्षुः । पक्षे । इरितो वा ( प्र० १ सू० ९९ ) दृशादेर्ङे गुणः । अदर्शत् अदर्शताम् अदर्शन् । ऋ गतौ । ऋच्छादेशः । ऋच्छति । ऋच्छेत् । ऋच्छतु । आर्च्छत् । रः ( प्र० १ सू० ८७ ) पश्चात् ऋ अर् ( वृ० १ प्र० २ सू० २४ ) वृद्धिः । आर आरतुः आरुः ॥ **अर्त्तिव्ययतीनां थपो नित्यमिट्** **। १३० ।** आरिथ आरथुः आर । आर आरिव आरिम ॥ **गुणोऽर्तिसंयोगाद्योः । १३१ ।** अर्तेः संयोगादेर्ऋदन्तस्य च गुणो भवति यक्ङि यङि किति णादावाशीर्यादादौ च ॥ अर्यात् । अर्ता । हनृतः स्यपः (प्र० १ सू० १०९) ॥ अरिष्यति । आरिष्यत् ॥ **सर्त्तिशास्त्यर्त्तिभ्यो ङो लुङि । १३२ ।** सेरपवादः । लित्पुषादेर्ङः । (प्र० १ सू० ११०) आरत् आरताम् आरन् । अर्तेर्वा ङः । सेरपवादो लुङीति केचित् । आर्षीत् । सृ गतौ । धावादेशः । धावति । शीघ्रगतावेव धावादेशः । सरति । ससार सस्रतुः सस्रुः । ऋादित्वात् । ससर्थ सस्रथुः सस्र । ससार-ससर सस्रिव सस्रिम ॥ **यादादौ । १३३ ।** ऋकारस्य रिङादेशो भवति यादादौ परस्मैपदे परे ॥ ङकारो व्यवधानार्थः । तेन ये ( प्र० १ सू० ९८ ) इति न दीर्घः । स्रियात् । सर्ता । सरिष्यति । असरिष्यत् । पुषादित्वात् ङः । असरत् असरताम् असरन् । शद्लृ शातने ॥ **शीयादेशे आत्मनेपदं वाच्यम् । १३४ ।** शीयते । शीयेत । शीयताम् । अशीयत । शशाद । लोपः पचाम् (प्र० १ सू० ८१) शेदतुः शेदुः । शेदिथ-शशत्थ । शद्यात् । शत्ता । शत्स्यति । अशत्स्यत । लृदित्वात्ङः । अशदत् । षद्लृविशरणगत्यवसादनेषु । सत्वम् । सीदादेशः । सीदति । ससाद सेदतुः सेदुः । सेदिथ-ससत्थ । सद्यात् । सत्ता । सत्स्यति । असत्स्यत् ।

असदत् । निपूर्वः । न्यषदत् । पा पाने । पिबादेशः । पिबति । पिबेत् । पिबतु । अपिबत् । पपौ पपतुः पपुः पपिथ-पपाथ । दादेरे ( प्र० १ सू० १२६ ) पेयात् । पाता । पास्यति । अपास्यत् । दादेः पे ( प्र० १ सू० ४४ ) अपात् । घ्रा गन्धोपादाने । जिघ्रादेशः । जिघ्रति । जिघ्रेत् । जिघ्रतु । अजिघ्रत् । जघ्रौ जघ्रतुः जघ्रुः । जघ्रिथ-जघ्राथ । घ्रायात् घ्रेयात् । घ्राता । घ्रास्यति । अघ्रास्यत् । अघ्रासीत् अघ्रात् । ध्मा शब्दाग्निसंयोगयोः । धमादेशः । धमति । धमेत् । धमतु । अधमत् । दध्मौ । ध्मायात् ध्मेयात् । ध्माता । ध्मास्यति । अध्मास्यत् । अध्मासीत् । ष्ठा गतिनिवृत्तौ । आदेः ष्णः स्नः ( प्र० १ सू० ६७ ) सकारे जाते निमित्ताभावेन ठस्य थः । तिष्ठादेशः । तिष्ठति । तिष्ठेत् । तिष्ठतु । अतिष्ठत् । शसात्खपाः ( प्र० १ सू० ६० ) तस्थौ तस्थतुः तस्थुः । स्थेयात् । स्थायात् । स्थाता । स्थास्यति । अस्थास्यत् । निपूर्वः । षत्वम् न्यष्ठात् । म्ना अभ्यासे । मनादेशः । मनति । मनेत् । मनतु । अमनत् । मम्नौ मम्नतुः मम्नुः मम्निथ-मम्नाथ । म्नायात् म्नेयात् । म्नाता । म्नास्यति । अम्नास्यत् । अम्नासीत् । दाण् दाने । यच्छादेशः । यच्छति । यच्छेत् । यच्छतु । अयच्छत् । ददौ ददतुः ददुः । दादेरे ( प्र० १ सू० १२६ ) देयात् । दाता । दास्यति । अदास्यत् । अदात् । ह्वृ कौटिल्ये । ह्वरति । ह्वरेत् । ह्वरतु । अह्वरत् । जह्वार । गुणोर्तिसंयोगाद्योः ( प्र० १ सू० १३१ ) जह्वरतुः जह्वरुः ॥ **ऋदन्तस्य थपो नेट् । १३५ ।** जह्वर्थ जह्वरथुः जह्वर । जह्वार-जह्वर जह्वरिव जह्वरिम । ह्वर्यात् । ह्वर्ता । हनृतः स्यपः ( प्र० १ सू० १०९ ) ह्वरिष्यति । अह्वरिष्यत् । वृद्धिः । अह्वार्षीत् अह्वार्ष्टाम् । स्कन्दिर् गतिशोषणयोः । स्कन्दति । स्कन्देत् । स्कन्दतु । अस्कन्दत् । चस्कन्द चस्क-

न्दतुः चस्कन्दुः चस्कन्दिथ ॥ **हसात्परस्य झसस्य सवर्णे झसे लोपो वाच्यः । १३६ ।** चस्कन्थ । नो लोपः (प्र० १ सू० ६१) स्कद्यात् स्कन्ता । स्कन्त्स्यति अस्कन्त्स्यत् ॥ **सावनिटो नित्यं वृद्धिः । १३७ ।** णित्वविधानसामर्थ्यादनुपधाभूतस्याप्यतो वृद्धिः । अस्कान्सीत् । इरितो वा ( प्र० १ सू० ९९ ) अस्कदत् । तॄ प्लवनतरणयोः । तरति । तरेत् । तरतु । अतरत् । कित्वाभावाद्गुणः ॥ **ऋसंयोगादेर्णादेरकित्वं वाच्यम् । १३८ ।** तॄफलभजत्रपाम् ( प्र० १ सू०११२ ) इत्येत्वपूर्वलोपौ । ततार तेरतुः तेरुः तेरिथ ॥ **ॠत इर् । १३९ ।** ॠकारस्य इर् भवति किति ङिति च परे ॥ य्वोर्विहसे ( वृ० १ प्र० १० सू० ७ ) तीर्यात् ॥ **ईटो ग्रहाम् । १४० ।** ग्रहादीनामिट ईकारो भवति ॥ तरीता-तरिता । तरीष्यति-तरिष्यति । अतरीष्यत्-अतरिष्यत् । अतारीत् अतारिष्टाम् अतारिषुः ॥ **वृद्धिहेतौ साविटो न दीर्घो वाच्यः । १४१ ।** रञ्ज रागे । उभयपदी ॥ **अपि रञ्जदंशषञ्जष्वञ्जाम् । १४२ ।** एषामनुस्वारस्य लोपो भवत्यपि परे ॥ रजति रजते । रजेत् रजेत । रजतु रजताम् । अरजत् अरजत । ररञ्ज ररञ्जतुः ररञ्जुः ररञ्जिथ-ररङ्क्थ ररञ्जथुः ररञ्ज । ररञ्जे । रज्यात् । रङ्क्षीष्ट । रङ्क्ता । रङ्क्ष्यति रङ्क्ष्यते । अरङ्क्ष्यत् अरङ्क्ष्यत । अराङ्क्षीत् । चोः कुः ( वृ० १ प्र० ९ सू० ५३ ) खसे चपा ( वृ० १ प्र० ४ सू० १८ ) षत्वम् । अराङ्क्ताम् अराङ्क्षुः । अरङ्क्त अरङ्क्षाताम् । अरङ्क्षत । दंश दंशने । दशति । दशेत् । दशतु । अदशत् । ददंश ददंशतुः ददंशुः ददंशिथ-ददंष्ट ददंशथुः । दश्यात् । ष्टुत्वम् । दंष्टा । दंक्ष्यति । अदंक्ष्यत् । णित्पे ( प्र० १ सू० ७८ ) णित्वाद्वृद्धिः ।

प्यात् । वस्ता ॥ **सस्तोऽनपि । १५२ ।** सकारस्य तकारो भवति अनपि सकारे परे ॥ वत्स्यति । अवत्स्यत् । वृद्धिः । अवात्सीत् । झसात् ( प्र० १ सू० ७९ ) "प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायात्" । अवात्ताम् अवात्सुः । वद व्यक्तायां वाचि । वदति । वदेत् । वदतु । अवदत् । उवाद ऊदतुः ऊदुः उवदिथ । उद्यात् । वदिता । वदिष्यति । अवदिष्यत् । अवादीत् । टुओश्वीऋ गतिवृद्ध्योः । टुकारौकारौ कार्यार्थौ । इऋ इत्संज्ञकः । श्वयति । श्वयेत् । श्वयतु । अश्वयत् ॥ **श्वयतेर्णादौ प्रथमं संप्रसारणं वा वक्तव्यम् । १५३ ।** ततो द्वित्वम् । शुशाव शुशुवतुः शुशुवुः । शुशविथ । संप्रसारणाभावपक्षे शिश्वाय शिश्वियतुः शिश्वियुः । शिश्वयिथ । संप्रसारणम् । ये ( प्र० १ सू० ९८ ) शूयात् । श्वयिता । श्वयिष्यति । अश्वयिष्यत् ॥ **श्वयतेः सौ वृद्ध्यभावो वाच्यः १५४** अश्वयीत् अश्वयिष्टाम् अश्वयिषुः । इरितो वा ( प्र० १ सू० ९९ ) ॥ **श्वयतेरिलोपो ङे वक्तव्यः । १५५ ।** अश्वत् ॥ **श्वयतेर्ङे द्वित्वं वा । १५६ ।** अशिश्वियत् । इत्यादि ॥ इति भ्वादिषु परस्मैपदिप्रक्रिया ॥ १ ॥

---

अथ भ्वादिष्वात्मनेपदिप्रक्रिया ॥ एध वृद्धौ । एधते । एधेत । एधताम् । ऐधत । कासादिप्रत्ययादाम् ( प्र० १ सू० ८९ ) एधाञ्चक्रे ॥ **आम्प्रत्ययो यस्माद्विहितः स चेदात्मनेपदी तर्हि अनुप्रयुक्तकृञ आत्मनेपदं भ्वसोर्नात्मनेपदम् । १ ।** एधामास एधांबभूव । विधानसामर्थ्यादस्तेर्भूभावो न । इट् । एधिषीष्ट । एधिता । एधिष्यते । ऐधिष्यत । ऐधिष्ट ऐधिषाताम् । ईक्ष दर्शनाङ्कनयोः ।

ईक्षते । ईक्षेत । ईक्षताम् । ऐक्षत । ईक्षाञ्चक्रे । ईक्षिषीष्ट । ईक्षिता । ईक्षिष्यते । ऐक्षिष्यत । ऐक्षिष्ट । दद दाने । ददते । ददेत । ददताम् । अददत । शशददवा ( प्र० १ सू० ९२ ) इति नैत्वपूर्वलोपौ । दददे दददाते दददिरे । ददिषीष्ट । ददिता । ददिष्यते । अददिष्यत । अददिष्ट । ष्वष्क गतौ । नामधातु ( प्र० १ सू० ६८ ) अनेन सत्वाभावः । ष्वष्कते । ष्वष्केत । ष्वष्कताम् । अष्वष्कत । पष्वष्के । ष्वष्किषीष्ट । ष्वष्किता । ष्वष्किष्यते । अष्वष्किष्यत । अष्वष्किष्ट अष्वष्किषाताम् । ऋज गतौ स्थैर्ये स्पर्शे च । उपधाया लघोः ( प्र० १ सू० ९४ ) अर्जते । अर्जेत । अर्जताम् । आर्जत । नुगशाम् ( प्र० १ सू० ८३ ) आभ्वोर्णादौ ( प्र० १ सू० ३१ ) आनृजे । अर्जिषीष्ट । अर्जिता । अर्जिष्यते । आर्जिष्यत । आर्जिष्ट । ष्वञ्ज परिष्वञ्जने । सत्वम् । अपिरञ्जदंशपञ्जष्वञ्जाम् ( प्र० १ सू० १४१ ) स्वजते । स्वजेत । स्वजताम् । अस्वजत । सस्वञ्जे सस्वञ्जाते सस्वञ्जिरे ॥ **स्वजतेर्णादौ वा किल्वम् । २ ।** सस्वजे सस्वजाते सस्वजिरे । चोः कुः ( वृ० १ प्र० ९ सू० ५३ ) खसे चपाः ( वृ० १ प्र० ४ सू० १८ ) षत्वम् । कषसंयोगे क्षः ( वृ० १ प्र० ९ सू० १० ) स्वङ्क्षीष्ट । स्वङ्क्ता । स्वङ्क्ष्यते । अस्वङ्क्ष्यत । झसात् (प्र०१सू०७९) अस्वङ्क्त अस्वङ्क्षाताम् अस्वङ्क्षत । अस्वङ्क्थाः । त्रपूष् लज्जायाम् । ऊकारषकारौ कार्यार्थौ । त्रपते । त्रपेत । त्रपताम् । अत्रपत । तृफलभजत्रपाम् ( प्र० १ सू० ११२ ) इत्येत्वपूर्वलोपौ । त्रेपे त्रेपाते त्रेपिरे । ऊदितो वा ( प्र० १ सू० ७० ) त्रपिषीष्ट-त्रप्सीष्ट । त्रपिता-त्रप्ता । त्रपिष्यते-त्रप्स्यते । अत्रपिष्यत-अत्रप्स्यत । अत्रपिष्ट अत्रपिषाताम् अत्रपिषत । अत्रप्त । तिज्

निशाने क्षमायां च ॥ गुप्भ्यः ( प्र० १ सू० १४३ ) तितिक्षते । तितिक्षेत तितिक्षताम् । अतितिक्षत । तितिक्षाञ्चक्रे तितिक्षांबभूव तितिक्षामास । तितिक्षिषीष्ट । तितिक्षिता । तितिक्षिष्यते । अतितिक्षिष्यत । अतितिक्षिष्ट ॥ गुप गोपनकुत्सनयोः ॥ जुगुप्सते । जुगुप्सेत । जुगुप्सताम् । अजुगुप्सत । जुगुप्साञ्चक्रे जुगुप्सांबभूव जुगुप्सामास । जुगुप्सिषीष्ट । जुगुप्सिता । जुगुप्सिष्यते । अजुगुप्सिष्यत । अजुगुप्सिष्ट ॥ मान विचारणे । द्वित्वम् । ह्रस्वः ( प्र० १ सू० ३२ ) **यः से । ३ ।** पूर्वस्याकारस्येकारो भवति से परे ॥ **मानादीनां पूर्वस्य दीर्घो वक्तव्य । ४ ।** मीमांसते । मीमांसेत । मीमांसताम् । अमीमांसत । मीमांसाञ्चक्रे मीमांसामास मीमांसांबभूव । मीमांसिषीष्ट । मीमांसिता । मीमांसिष्यते । अमीमांसिष्यत । अमीमांसिष्ट । वध निन्दायाम् ( वृ० १ प्र० ९ सू० ७ ) वीभत्सते । बीभत्सेत । वीभत्सताम् । अवीभत्सत । वीभत्सांचक्रे, वीभत्सिषीष्ट । वीभत्सिता । वीभत्सिष्यते । अवीभत्सिष्यत । अवीभत्सिष्ट । पण व्यवहारे स्तुतौ । पन च । आयः ( प्र० १ सू० १०० ) पणायते । पणायेत । पणायताम् । अपणायत । पणायाञ्चक्रे । आयाभावपक्षे पेणे पेणाते पेणिरे । पणायिषीष्ट-पणिषीष्ट । पणायिता-पणिता । पणायिष्यते-पणिष्यते । अपणायिष्यत-अपणिष्यत । अपणायिष्ट-अपणिष्ट । एवं पन च । कमु कान्तौ ॥ **कमेः स्वार्थे ञिः प्रत्ययो वक्तव्यः । ५** अनपि तु वा वृद्धिः । सधातुः ( प्र० १ सू० १०१ ) अपूगुणौ । अयादेशः । कामयते । कामयेत । कामयताम् । अकामयत । कामयाञ्चक्रे चकमे । कामयिषीष्ट-कमिषीष्ट । कामयिता-कमिता । कामयिष्यते-कमिष्यते । अकामयिष्यत-अकमिष्यत । अकामि त इति स्थिते ॥ **ञेरङ्**

**द्विश्च । ६ ।** ण्यन्ताद्धातोर्भूतेऽर्थे अङ्प्रत्ययो भवति दिबादौ परतः ॥ सेरपवादः । धातोश्च द्वित्वम् ॥ **णेः । ७ ।** इडागमवर्जिते अनपि विषये णेर्लोपो भवति ॥ ह्रस्वः ( प्र० १ सू० ३२ ) कुहोश्चुः ( प्र० १ सू० ६९ ) ॥ **अङि लघौ ह्रस्व उपधायाः । ८ ।** अङि सत्युपधाया ह्रस्वो भवति पूर्वसंबन्धिनोऽकारस्येकारो भवति लघुनि धात्वक्षरे परे ॥ **लघोर्दीर्घः । ९ ।** अङि सति हसादेर्लघोः पूर्वस्य दीर्घो भवति लघुनि धात्वक्षरे परे ॥ अचीकमत अचीकमेताम् अचीकमन्त ॥ णेरभावपक्षे ॥ **कमेरङ्द्वित्वे वाच्ये । १० ।** ण्यन्तत्वाभावान्न दीर्घेकारौ । अचकमत । अय गतौ । अयते । अयेत । अयताम् । आयत ॥ **परापूर्वेऽयतावुपसर्गरेफस्य लत्वं वाच्यम् । ११ ।** पलायते । पलायेत । पलायताम् । अपलायत । अयाञ्चक्रे अयामास अयांबभूव । अयिषीष्ट । अयिता । अयिष्यते । आयिष्यत । आयिष्ट आयिषाताम् आयिषत । आयिढ्वं आयिध्वम् । दय दानगतिहिंसादानेषु । दयते । अयतिवत्प्रक्रिया । घट चेष्टायाम् । घटते । घटेत । घटताम् । अघटत । कुहोश्चुः ( प्र० १ सू० ६९ ) जघटे । घटिषीष्ट । घटिता । घटिष्यते । अघटिष्यत । अघटिष्ट । ईह चेष्टायाम् । ईहते । ईहेत । ईहताम् । ऐहत । ईहाञ्चक्रे । ईहिषीष्ट । ईहिता । ईहिष्यते । ऐहिष्यत । ऐहिष्ट ॥ काशृ दीप्तौ ॥ काशते । काशेत । काशताम् । अकाशत । विद् दरिद्रा ( प्र० १ सू० ८६ ) काशाञ्चक्रे । चकाशे । काशिषीष्ट । काशिता । काशिष्यते । अकाशिष्यत । अकाशिष्ट । कासृ शब्दकुत्सायाम् । कासते । कासेत । कासताम् । अकासत । कासाञ्चक्रे । चकासे । कासिषीष्ट । कासिता । कासिष्यते । अकासिष्यत । अकासिष्ट । षिवृ सेवने । सत्वम् । सेवते । सेवेत । सेवताम् । असेवत ।

सिषेवे सिषेवाते । सेविषीष्ट । सेविता । सेविष्यते । असेविष्यत । असेविष्ट । गाङ् गतौ । सवर्णदीर्घे कृते । आकारत्वादातोऽन्तोदनतः ( प्र० १ सू० ४८ ) गाते गाते गाते । गेत । गाताम् । अगात । जगे जगाते जगिरे । गासीष्ट । गाता । गास्यते । अगास्यत । अगास्त अगासाताम् । रुङ् गतौ भाषणे च । गुणः (प्र० १सू० ११) रवते । रवेत । रवताम् । अरवत अरवेताम् । अनेकस्वरत्वादसंयोगपूर्वत्वाच्चोकारस्य वत्वे प्राप्ते ॥ **नानप्योर्वः । १२ ।** अनपि विषये धातोरुवर्णस्य वत्वं न भवति ॥ तत उव् । नुधातोः ( प्र० १ सू० ९९ ) रुरुवे रुरुवाते रुरुविरे । रविषीष्ट । रविता । रविष्यते । अरविष्यत । अरविष्ट । देङ् पालने । दयते । दयेत । दयताम् । अदयत ॥ **दयतेर्णादौ दिग्यादेशो द्वित्वाभावश्च वक्तव्यः । १३ ।** दिग्ये संध्यक्षराणामा ( प्र० १ सू० १२२ ) दासीष्ट । दाता । दास्यते । अदास्यत ॥ **अपिद्दाधास्थामित्वं सेर्ङित्वं आत्मनेपदे वाच्यम् । १४ ।** ङित्वान्न गुणः ॥ **लोपो ह्रस्वाज्झसे । १५ ।** ह्रस्वादुत्तरस्य सेर्लोपो भवति झसे परे ॥ अदित अदिषाताम् अदिषत । डीङ् विहायसा गतौ । डयते । डयेत । डयताम् । अडयत । नुधातोः ( प्र० १ सू० ९९ ) डीड्ये । डयिषीष्ट । डयिता । डयिष्यते । अडयिष्यत । अडयिष्ट ॥ दैङ् त्रैङ् पालने । दायते । दायेत । दायताम् । अदायत ॥ **दैङो णादौ दिग्यादेशो द्वित्वाभावश्च । १६ ।** दिग्ये । दासीष्ट । अपिद्दाधास्थामि ( प्र० २ सू० १४ ) लोपो ह्रस्वाज्झसे ( प्र० २ सू० १५ ) अदित । त्रायते । तत्रे । अत्रास्त । द्युतङ् द्योतने । उपाधाया लघोः ( प्र० १ सू० ९४ ) द्योतते । द्योतेत । द्योतताम् । अद्योतत ॥ **द्युतेः पूर्वस्य संप्रसारणं वक्तव्यं णादौ**

**परे। १७।** दिद्युते। द्योतिषीष्ट। द्योतिता। द्योतिष्यते। अद्योतिष्यत। अद्योतिष्ट। **द्युतादिभ्यो लुङि वा परस्मैपदं वाच्यम्।१८।** लित्पुषादेर्ङः। (प्र० १ सू० ११०) अद्युतत्। वृतुङ् वर्तने। वर्तते वर्तेते वर्तन्ते। वर्तेत। वर्तताम्। अवर्तत। ववृते। वर्तिषीष्ट। वर्तिता। वर्तिष्यते। अवर्तिष्यत। **वृतादिभ्यः स्यसनोर्वा पं पेऽनिट्त्वं च। १९।** वृतु वृधु शृधु स्यन्दू कृपू एते वृतादयः। वर्त्स्यति। अवर्त्स्यत्। अवर्तिष्ट। परस्मैपदपक्षे। लित्पुषादेर्ङः (प्र० १ सू० ११०) अवृतत्॥ वृधुङ् वृद्धौ। वर्धते। वर्धेत। वर्धताम्। अवर्धत। ववृधे। वर्धिषीष्ट। वर्धिता। वर्धिष्यते अवर्धिष्यत। वर्त्स्यति। अवर्त्स्यत्। अवर्धिष्ट। अवृधत्। शृधुङ् पर्दने। शर्धते। शर्धेत। शर्धताम्। अशर्धत। शशृधे। शर्धिषीष्ट। शर्धिता। शर्धिष्यते। अशर्धिष्यत। अशर्धिष्ट। शर्त्स्यति। अशर्त्स्यत्। अशृधत्। स्यन्दू प्रस्रवणे। स्यन्दते। स्यन्देत। स्यन्दताम्। अस्यन्दत। सस्यन्दे। ऊदितो वा (प्र० १ सू० ७०) स्यन्दिषीष्ट। स्यन्त्सीष्ट। स्यन्दिता-स्यन्ता। स्यन्दिष्यते-स्यन्त्स्यते स्यन्त्स्यति। अस्यन्दिष्यत अस्यन्त्स्यत अस्यन्त्स्यत्। अस्यन्दिष्ट अस्यन्त। पक्षे अस्यदत्। कृपू सामर्थ्ये। गुणः॥ **कृपो रो लः। २०।** कृपो रेफस्य लो भवति ऋकारस्य ऌकारो भवति॥ कल्पते। कल्पेत। कल्पताम्। अकल्पत। चक्लृपे। कल्पिषीष्ट। इडभावपक्षे॥ **सिस्योः। २१।** उपधाया गुणो न भवति सिस्योरनिटोः परतः॥ क्लृप्सीष्ट। कल्पिता-कल्प्ता। कल्पिष्यते-कल्प्स्यते कल्प्स्यति। अकल्पिष्यत अकल्प्स्यत अकल्प्स्यत्। अकल्पिष्ट अक्लृप्त अक्लृप्साताम् अक्लृप्सत अक्लृपत्। व्यथ दुःखभयचलनयोः। व्यथते। व्यथेत। व्यथताम्। अव्यथत॥ **व्यथतेर्णादौ पूर्वस्य संप्रसारणं वक्तव्यम्।२२।**

विव्यथे । व्यथिषीष्ट । व्यथिता । व्यथिष्यते । अव्यथिष्यत । अव्यथिष्ट । रमु क्रीडायाम् । रमते । रमेत । रमताम् । अरमत ॥ **व्याङ्पर्युपेभ्यो रमः पम् । २३ ।** विरमति आरमति परिरमति उपरमति । रेमे । रंसीष्ट । रन्ता । रंस्यते । अरंस्त अरंसाताम् अरंसत । विपूर्वः । आदन्तानाम् ( प्र० १ सू० १०७ ) इतीट्सकौ । व्यरंसीत् व्यरंसिष्टाम् । ञित्वरा संभ्रमे । ञिआवितौ । त्वरते । त्वरेत । त्वरताम् । अत्वरत । तत्वरे । त्वरिषीष्ट । त्वरिता । त्वरिष्यते । अत्वरिष्यत । अत्वरिष्ट अत्वरिढ्व-अत्वरिध्वम् । षह मर्षणे । सहते । सहेत । सहताम् । असहत । सेहे । सहिषीष्ट । सहिता । इषुसह ( प्र० १ सू० १११ ) इति वेट् । **होढः** ( वृ० १ प्र० ९ सू० ११ ) तथोर्धः ( प्र० १ सू० ७२ ) ष्टुत्वम् । ढलोपः ॥ **सहिवहोरोदवर्णस्य । २४ ।** सहिवहोरवर्णस्यौकारादेशो भवति ढलोपनिमित्ते ढकारे परे ॥ सोढा । सहिष्यते । असहिष्यत । असहिष्ट ॥ ॥ इति भ्वादिष्वात्मनेपदिप्रक्रिया ॥ २ ॥

---

अथोभयपदिप्रक्रिया ॥ राजृ दीप्तौ । ऋकार ऋदित्कार्यार्थः । राजति राजते । राजेत् राजेत । राजतु राजताम् । अराजत् अराजत । रराज । फणादित्वादेत्वपूर्वलोपौ । रेजतुः-रराजतुः रेजुः-रराजुः रेजे रराजे । राज्यात् राजिषीष्ट । राजिता राजिता । राजिष्यति राजिष्यते । अराजिष्यत् अराजिष्यत । अराजीत् अराजिष्ट । खन खनने । खनति खनते । खनेत् खनेत । खनतु खनताम् । अखनत् अखनत । चखान । गमां स्वरे ( प्र० १ सू० १०८ ) चख्नतुः चख्नुः चख्ने । खन्यात् ॥ **जनखनसनां क्ङिति ये आकारो वा वक्तव्यः । १ ।** खायात् खनिषीष्ट ।

खनिता खनिता । खनिष्यति खनिष्यते । अखनिष्यत् अखनिष्यत । अखानीत् अखनीत् अखनिष्ट । हृञ् हरणे । हरति हरते । हरेत् हरेत । हरतु हरताम् । अहरत् अहरत । जहार जह्रतुः जह्रुः ॥ **ऋदन्तस्य थपो नेट् । २ ।** जहर्थ जह्रे । यादादौ । ह्रियात् ॥ **उः । ३ ।** ऋकारस्य गुणो न भवति सिस्योरनिटोः परतः ॥ हृषीष्ट । हर्ता २ । हन्नृतः स्यपः (प्र० १ सू० १०९) हरिष्यति हरिष्यते । अहरिष्यत् अहरिष्यत । अहार्षीत् । लोपो ह्रस्वाज्झसे ( प्र० २ सू० १९ ) अहृत अहृषाताम् अहृषत । गुहू संवरणे । **गुहेरुपधाया ऊद्गुणहेतौ स्वरे । ४ ।** गूहति-गूहते । जुगूह जुगूहतुः जुगूहिथ । जुगोढ जुघुक्षे-जुगुहिषे जुगुहिध्वे-जुघूढ्वे । गूहिषीष्ट-घुक्षीष्ट । गूहिता-गोढा । गूहिष्यति-घोक्ष्यति॥ **दुहदिहलिहगुहूभ्यः सको लुग्वा यकारतकारयोरादि । ५ ।** अगूढ-अघुक्षत ॥ **आति सकोऽकारलोपः स्वरे । ६ ।** अघुक्षाताम् अघुक्षन्त अगूढाः अघुक्षथाः अघुक्षाथाम् अघूढ्वं-अघुक्षध्वम् । अघुक्षि-अगुह्वहि अघुक्षावहि अघुक्षामहि । दान आर्जवे । गुप्भ्यः (प्र० १ सू० १४३ ) यः से ( प्र० २ सू० ३ ) मानादीनां पूर्वस्य दीर्घो वक्तव्यः । ( प्र० २ सू० ४ ) दीदांसति दीदांसते । दीदांसेत् दीदांसेत । दीदांसतु दीदांसताम् । अदीदांसत् अदीदांसत । दीदांसाञ्चक्रे दीदांसामास दीदांसांबभूव । दीदांस्यात् दीदांसिषीष्ट । दीदांसिता २ । दीदांसिष्यति दीदांसिष्यते । अदीदांसिष्यत् अदीदांसिष्यत । अदीदांसीत् अदीदांसिष्ट । शान तेजने । शीशांसति शीशांसते । दानवत् । भज सेवायाम् । भजति भजते । भजेत् भजेत । भजतु भजताम् । अभजत् अभजत । बभाज । तॄफलभज (प्र० १सू० ११२) इत्येत्वपूर्वलोपौ । भेजतुः भेजुः भेजिथ बभ-

क्थ । भेजे भेजाते भेजिरे । भज्यात् भक्षीष्ट । भक्ता भक्ता । भक्ष्यति भक्ष्यते। अभक्ष्यत् अभक्ष्यत । अभाक्षीत् अभाक्ताम् अभाक्षुः । अभक्त अभक्षाताम् अभक्षत । डुपचष् पाके । डुकारषकारौ कार्यार्थौ । पचति पचते पचेत् पचेत । पचतु पचताम् । अपचत् अपचत । पपाच पेचतुः पेचुः पेचे। पच्यात् पक्षीष्ट । पक्ता पक्ता । पक्ष्यति पक्ष्यते । अपक्ष्यत् अपक्ष्यत । अपाक्षीत् अपक्त अपक्षाताम् अपक्षत । अञ्च गतौ याचने च । आञ्चीत्। व्यय गतौ । वव्यये । अव्ययीत् । श्रिञ् सेवायाम् । गुणः ( प्र० १ सू० ११ ) श्रयति श्रयते । शिश्राय शिश्रियतुः शिश्रिये । श्रीयात् श्रयिषीष्ट । श्रयिता श्रयिता । श्रयिष्यति श्रयिष्यते। अश्रयिष्यत् अश्रयिष्यत ॥ **स्नुश्रिद्रुवां सेरङ् धातोर्द्वित्वं च** । ७। अशिश्रियत् अशिश्रियत । त्विष् दीप्तौ । त्वेषति त्वेषते । तित्वेष तित्विषे । त्विष्यात् त्विक्षीष्ट । त्वेष्टा २ । त्वेक्ष्यति त्वेक्ष्यते । अत्वेक्ष्यत् अत्वेक्ष्यत । हशषान्तात्सक् ( प्र० १ सू० ११९ ) अत्विक्षत ॥ **सस्यात्मनेपदे स्वरे टिलोपो वाच्यः** । ८। अकारलोपे कृते आतोऽन्तोदनतः ( प्र०१ सू० ४८ ) अत्विक्षाताम् अत्विक्षत । यज देवपूजासंगतिकरणदानेषु । यजति यजते । यजेत् यजेत । यजतु यजताम् । अयजत् अयजत । णवादौ पूर्वस्य ( प्र०१ सू०१४९ ) इयाज । यजां यवराणां य्वृतःसंप्रसारणम् ( प्र० १ सू० १५० ) ईजतुः ईजुः इयजिथ-इयष्ट ईजे । इज्यात् । यक्षीष्ट । यष्टा यष्टा । यक्ष्यति यक्ष्यते । अयक्ष्यत् अयक्ष्यत । अयाक्षीत् अयाष्टाम् अयाक्षुः । अयष्ट अयक्षाताम् अयक्षत अयष्ठाः अयक्षाथाम् ॥ **ध्वे च सेर्लोपः** । ९ । षत्वम् । झबे जबाः ( वृ० १ प्र० २ सू० ३ ) ष्टुत्वम् । अयड्ढ्वम् । अयक्षि अयक्ष्वहि अयक्ष्महि । टुवप् बीजत-

न्तुसन्ताने । डु इत् । वपति । वपेत् । उवाप ऊपतुः ऊपुः उवपिथ-उवप्थ ऊपे । उप्यात् वप्सीष्ट । वप्ता २ । वप्स्यति वप्स्यते । अवप्स्यत् अवप्स्यत । अवाप्सीत् अवप्त । वह प्रापणे । वहति वहते । उवाह ऊहतुः ऊहुः । उवहिथ । होढः ( वृ० १ प्र० ९ सू० ११ ) तथोर्धः ( प्र० १ सू० ७२ ) ष्टुत्वम् । ढलोपः । सहिवहोरोदवर्णस्य ( प्र० २ सू० २४ ) उवोढ । उह्यात् वक्षीष्ट । वोढा २ । वक्ष्यति वक्ष्यते । अवक्ष्यत् अवक्ष्यत । अवाक्षीत् अवोढाम् । अवोढ अवक्षाताम् अवक्षत । वेञ् तन्तुसन्ताने वयति वयते॥**वेञो णादौ संप्रसारणाभावो वाच्यः ।१०।** संध्यक्षराणामा ( प्र० १ सू० १२२ ) ववौ । वादित्वान्नैत्वपूर्वलोपौ । ववतुः ववुः ववे ॥ **वेञो वय् णादौ वा वक्तव्यः । ११ ।** उवाय ॥ **ग्रहां क्किति च । १२ ।** ग्रहादीनां संप्रसारणं स्यात् किति ङिति च परे ॥ इति संप्रसारणम् । यकारस्य संप्रसारणनिषेधः । ऊयतुः ऊयुः उवयिथ ऊयथुः । ऊये ऊयाते ऊयिरे ॥ **वयो यस्य किति णादौ वो वा वक्तव्यः । १३ ।** ऊवतुः ऊवुः ऊवे । ऊयात् वासीष्ट । वाता वाता । वास्यति वास्यते । अवास्यत् अवास्यत । अवासीत् । आदन्तानाम् ( प्र० १ सू० १०७ ) इति इट्सकौ । अवासिष्टाम् अवास्त । व्येञ् संवरणे । व्ययति व्ययते ॥ **व्येञो णादौ नात्वम् । १४ ।** विव्याय विव्यतुः विव्युः ॥ **अत्त्यर्तिव्ययतीनां थपो नित्यमिट् । १५ ।** विव्ययिथ विव्ये । वीयात् व्यासीष्ट । व्याता व्याता । व्यास्यति व्यास्यते । अव्यास्यत् अव्यास्यत । अव्यासीत् अव्यास्त । ह्वेञ् स्पर्धायाम् । ह्वयति ह्वयते ॥ **अद्विरुक्तस्य ह्वयतेः संप्रसारणं वक्तव्यम् । १६ ।** जुहाव जुहुवतुः जुहुवुः । जुहविथ जुहोथ । जुहुवे

जुहुवाते जुहुविरे । हूयात् ह्वासीष्ट । ह्वाता ह्वाता । ह्वास्यति ह्वास्यते । अह्वास्यत् अह्वास्यत ॥ **अस्यतिवक्तिख्यातिलिपिसिचिह्वयतीनां सेङों वा वाच्यः । १७ ।** अह्वत अह्वेताम् अह्वन्त । ह्वास्त अह्वासाताम् अह्वासत । ऋत जुगुप्सायां कृपायां च ॥ **ऋतेरीयङ् स्वार्थेऽनपि तु वा । १८ ।** ऋतीयते । ऋतीयाञ्चक्रे आनर्त । ऋतीयिष्यते । आर्तीत् आर्तीयिष्ट ॥

॥ इति भ्वादिषूभयपदिप्रक्रिया ॥३॥ इत्यब्विकरणा भ्वादयो धातवः ॥

---

इदानीं लुग्विकरणाददादेर्गणात्कर्तरि तिवादयो वर्ण्यन्ते ॥ अद् भक्षणे । अप् ( प्र० १ सू० १० ) ॥ **अदादेर्लुक् । १ ।** अदादेर्गणादुत्पन्नस्यापो लुग्भवति ॥ खसे चपा झसानाम् ( वृ० १ प्र० ४ सू० १८ ) अत्ति अत्तः अदन्ति । अत्सि अत्थः अत्थ । अद्मि अद्वः अद्मः । अद्यात् । अत्तु-अत्ताद्वा अत्ताम् अदन्तु ॥ **झसाद्धिर्हेः । २ ।** झसादुत्तरस्य हेर्धिर्भवति ॥ अद्धि-अत्ताद्वा अत्तम् अत्त । अदानि अदाव अदाम ॥ **अदोदिस्योरडागमो वक्तव्यः । ३ ।** आदत् आदः ॥ **सिसर्योरदेर्घस्लृ लिटि तु वा । ४ ।** जघास । गमां स्वरे ( प्र० १ सू० १०८ ) खसे चपा ( वृ० १ प्र० ४ सू० १८ ) घसादेः षः ( प्र० १ सू० १९१ ) क्षः । जक्षतुः जक्षुः । जघसिथ । पक्षे । आद आदतुः आदुः । आदिथ । अद्यात् । अत्ता । अत्स्यति । आत्स्यत् ॥ ऌदित्वादङ् । अघसत् अघसताम् अघसन् । प्सा भक्षणे । प्साति प्सातः प्सान्ति । प्सायात् प्सायाताम् प्सायुः । प्सातु-प्साताद्वा प्साताम् प्सान्तु । अप्सात् अप्साताम् ॥ **आदन्तविद्द्विषामन उस् वा वक्त-**

**न्यः । ५ ।** उस्यालोपः (प्र० १ सू० १२७) अप्सुः-अप्सान् । पप्सौ पप्सतुः पप्सुः । पप्सिथ-पप्साथ । प्सेयात् प्सायात् । प्साता । प्सास्यति । अप्सास्यत् । आदन्तानाम् ( प्र० १ सू० १०७ ) इतीट्सकौ । अप्सासीत् अप्सासिष्टाम् । मा माने । माति । मायात् । मातु । अमात् अमाताम् अमुः अमान् । ममौ । दादेरे ( प्र० १ सू० १२६ ) मेयात् । माता । मास्यति । अमास्यत् । अमासीत् । या प्रापणे । याति । यायात् । यातु । अयात् अयाताम् अयुः अयान् । ययौ । यायात् । याता । यास्यति । अयास्यत् । अयासीत् । वा गतिगन्धनयोः । वाति । यातिवत् । रा दाने । तद्वत् । ला दानग्रहणयोः । लाति । ललौ । तद्वत् । द्रा कुत्सायां गतौ च । द्राति । दद्रौ । द्रायात् द्रेयात् । द्राता । द्रास्यति । अद्रास्यत् । अद्रासीत् । ख्या प्रकथने । ख्याति । ख्यायात् । ख्यातु । अख्यात् । चख्यौ । ख्यायात् ख्येयात् । ख्याता । ख्यास्यति । अख्यास्यत् । पुषादित्वात् ङः । आतोऽनपि (प्र०१सू०१२४) अख्यत् । पा रक्षणे । पाति । पायात् । पातु । अपात् । पपौ । पाता । पास्यति । अपास्यत् । अपासीत् । भा दीप्तौ । भाति । बभौ । अभासीत् । ष्णा शौचे । स्नाति । सस्नौ । स्नायात् स्नेयात् । अस्नासीत् । वश कान्तौ । छशषराजादेः षः ( वृ०१प्र०९सू०४४ ) इति षत्वम् । ष्टुत्वम् । वष्टि । ग्रहां क्ङिति च ( प्र० ३ सू० १२ ) उष्टः उषन्ति । षत्वम् । षढोः कः से (प्र०१सू०११७) क्षः । वक्षि उष्ठः उष्ठ । वश्मि उश्वः उश्मः । उश्यात् उश्याताम् उश्युः । वष्टु उष्टात्-उष्टाम् उशन्तु । हसाद्धिर्हेः ( प्र० ४ सू० २ ) झबे जबाः ( वृ० १ प्र० २ सू० ३ ) ष्टुत्वम् । उड्ढि उष्टात् उष्टम् उष्ट । वशानि वशाव वशाम ॥ **दिस्योर्हसात् । ६ ।** हसादुत्तरयोर्दिप्सिपोर्लोपो भवति ॥ षत्वम् । षो डः

( वृ० १ प्र० ९ सू० ४५ ) वावसाने ( वृ० १ प्र० ९ सू० ८ अवट्-अवड् । संप्रसारणम् । अडागमः । उओ ( वृ० १ प्र० २ सू १३) ओऔऔ (वृ०१प्र०२सू०१४) औष्टाम् औशन् । अवट् अव औष्टम् औष्ट । अवशम् औश्व औश्म । उवाश ऊशिव ऊशिम ।उश्या उश्यास्ताम् उश्यासुः । वशिता । वशिष्यति। अवशिष्यत् । अवाशीत् हन् हिंसागत्योः । हन्ति ॥ **लोपस्त्वनुदात्ततनाम्** । ७ । अनु दात्तानां तनादीनां च ञमस्य लोपो भवति किति ङिति झ परे ॥ तुशब्दात्क्वचिदझसेऽपि क्यप्प्रत्ययादौ ञमस्य लोपः

**रमिर्यमिनमी हन्तिरनुदात्ता गमिर्मनिः ॥**

**तनुः क्षण् क्षिण् ऋणुकृणू वनुर्वमुस्तनादयः । १५**

हतः । गमां स्वरे ( प्र० १ सू० १०८ ) हनो घ्ने ( वृ ० प्र० ९ सू० ३० ) घ्नन्ति । हंसि हथः हथ । हन्मि हन्वः हमः । हन्यात् हन्याताम् हन्युः । हन्तु-हताद्वा हताम् घ्नन्तु ॥ **जह्योधि शाधि । ८ ।** हन्तेर्जहिशब्दोऽस्तेरेधिशब्दः शास्तेः शाधिशब्दो निपात्यते हिविषये ॥ जहि-हताद्वा हतम् हत । हनानि हनाव हनाम । अहन् अहताम् अघ्नन् । अहन् अहतम् अहत । अहनम् अहन्व अहन्म । हनो घ्ने (वृ०१प्र०९सू०३०) वृद्धिः। जघान जघ्नतुः जघ्नुः ॥ **द्विरुक्तस्य हन्तेस्थपि घत्वं वाच्यम् ।९।** जघनिथ जघन्थ जघ्नथुः जघ्न। जघान-जघन जघ्निव जघ्निम ॥ **हन्तेः स्याशीर्यादादौ वधादेशो वक्तव्यः । १० ।** वध्यात् वध्यास्ताम् वध्यासुः । हन्ता हन्तारौ हन्तारः । हनृतः स्यपः ( प्र० १ सू० १०९ ) हनिष्यति हनिष्यतः हनिष्यन्ति । अहनिष्यत् अहनिष्यताम् अहनि-

ष्यन् ॥ **जनिवध्योर्न वृद्धिः । ११ ।** वधादेशे कृते इट् । अवधीत् अवधिष्टाम् अवधिषुः । अवधीः अवधिष्टम् अवधिष्ट । यु मिश्रणे । गुणः ( प्र० १ सू० ११ ) ॥ **ओरौ । १२ ।** उकारस्याद्विरुक्तस्य औकारादेशो भवति पिति त्सिम अवादौ विषये ॥ यौति युतः । नुधातोः ( प्र० १ सू० ९९ ) युवन्ति । यौषि युथः युथ । यौमि युवः युमः । युयात् । यौतु-युताद्वा युताम् युवन्तु । युहि-युताद्वा युतम् युत । यवानि यवाव यवाम । अयौत् अयुताम् अयुवन् । अयौः अयुतम् अयुत । अवयम् अयुव अयुम । धातोर्नामिनः ( प्र० १ सू० ८८ ) । युयाव । नानप्योर्वः ( प्र० २ सू० १२ ) युयुवतुः युयुवुः । युयविथ युयुवथुः । यूयात् । यविता । यविष्यति । अयविष्यत् । अयावीत् अयाविष्टाम् अयाविषुः । तु गतिवृद्धिहिंसासु ॥ **तुरुनुस्तुभ्योऽद्विरुक्तेभ्यो हसादीनां चतुर्णामीड्वा । १३ ।** तौति-तवीति तुतः-तुवीतः तुवन्ति । तौषि-तवीषि तुथः-तुवीथः तुथ तुवीथ । तौमि-तवीमि । तुयात्-तुवीयात् । तौतु-तवीतु तुतात् तुवीतात् तुताम् तुवीताम् तुवन्तु । तुहि-तुवीहि अतौत्-अतवीत् । तुवाव । तोता । तोष्यति । अतोष्यत् । अतौषीत् । रु शब्दे । रौति-रवीति रुतः-रुवीतः रुवन्ति । रौषि-रवीषि । रुयात् रुवीयात् । रौतु-रवीतु रुतात् रुवीतात् । अरौत्-अरवीत् अरुताम्-अरुवीताम् अरुवन् । अरौः-अरवीः । रुराव रुरुवतुः रुरुवुः । रुरविथ । रूयात् । रोता । रोष्यति । अरोष्यत् । अरौषीत् । दु गतौ भौवादिकः । दवति । दवेत् । दवेत् । दवतु । अदवत् । दुदाव । दुयात् । दोता । दोष्यति । अदोष्यत् । अदौषीत् अदौष्टाम् अदौषुः । णु स्तुतौ । आदेः ष्णः स्नः ( प्र० १ सू० ६७ ) नौति-नवीति नुतः-नुवीतः नुवन्ति । नुनाव ।

न्तु-मार्जन्तु । मृड्ढि मृष्टात् मृष्टम् मृष्ट । मार्जानि मार्जाव मार्जाम । अमार्ट्-अमार्ड् अमृष्टाम् अमृजन्-अमार्जन् । अमार्ट्-अमार्ड् अमृष्टम् अमृष्ट । अमार्जम् अमृज्व अमृज्म । ममार्ज ममृजतुः-ममार्जतुः ममृजुः-ममार्जुः । ममार्जिथ-ममार्ष्ठ ममृजथुः-ममार्जथुः । मृज्यात् । मार्जिता-मार्ष्टा । मार्जिष्यति-मार्क्ष्यति । अमार्जिष्यत्-अमार्क्ष्यत् । अमार्जीत् अमार्जिष्टाम् अमार्जिषुः । अमार्क्षीत् अमार्ष्टाम् अमार्क्षुः । वच परिभाषणे । वक्ति वक्तः ॥ **नहि वचिरन्तिपरः प्रयोक्तव्यः किन्तु वदन्तीत्युच्चारणीयम् । २७ ।** वदन्ति । वक्षि वक्थः वक्थ । वच्मि वच्वः वच्मः । वच्यात् । वक्तु-वक्तात् वक्ताम् । वग्धि-वक्तात् वक्तम् वक्त । अवक्-अवग् अवक्ताम् अवचन् । अवक्-अवग् अवक्तम् अवक्त । अवचम् अवच्व अवच्म । णबादौ पूर्वस्य (प्र० १ सू० १४९) उवाच । यजां यवराणां ऋतः संप्रसारणम् ( प्र० १ सू० १५० ) ऊचतुः ऊचुः । उवचिथ-उवक्थ । उच्यात् । वक्ता । वक्ष्यति । अवक्ष्यत् ॥ अस्यतिवक्ति ( प्र० ३ सू० १७ ) इति ङः ॥ **ङे वचेरुमागमो वक्तव्यः । २८ ।** उओ (वृ० १ प्र० २ सू० १३) अवोचत् अवोचताम् अवोचन् । रुदिर् अश्रुविमोचने ॥ **रुदादेश्चतुर्णां हसादेः । २९ ।** रुदादेः परेषां तिवादिचतुर्णां मध्ये हकारवसादेः प्रत्ययस्येट् भवति ॥

**रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा ॥**
**जक्षितिश्चैव विज्ञेयो रुदादिपञ्चको गणः ॥ १६ ॥**

रोदिति रुदितः रुदन्ति । रोदिषि रुदिथः रुदिथ । रोदिमि रुदिवः रुदिमः । रुद्यात् । रोदितु-रुदितात्वा रुदिताम् रुदन्तु । रुदिहि-रु-

दिताद्वा रुदितम् रुदित । रोदानि रोदाव रोदाम ॥ **रुदादेर्दिस्योरीडटौ च वक्तव्यौ । ३० ।** अरोदीत् अरोदत् । रुरोद रुरुदतुः रुद्यात् । रोदिता । रोदिष्यति । अरोदिष्यत् । अरोदीत् । इरितो वा (प्र० १ सू० ९९ ) अरुदत् । ञिष्वप् शये । ञि इत् । स्वपिति । स्वप्यात् । स्वपितु-स्वपिताद्वा । अस्वपीत् । अस्वपत् । संप्रसारणम् । सुष्वाप सुषुपतुः सुषुपुः । सुष्वपिथ-सुष्वप्थ । सुप्यात् । स्वप्ता । स्वप्स्यति । अस्वप्स्यत् अस्वाप्सीत् अस्वाप्ताम् अस्वाप्सुः । श्वस् प्राणने । श्वसिति । श्वस्यात् । श्वसितु । अश्वसीत् अश्वसत् अश्वसिताम् अश्वसन् । शश्वास शश्वसतुः शश्वसुः । श्वस्यात् । श्वसिता । श्वसिष्यति । अश्वसिष्यत् । ह्म्यन्तक्षणेति ( प्र० १ सू० ९९ ) वृद्ध्यभावः । अश्वसीत् । अन प्राणने ॥ **अनिति । ३१ ।** प्रपूर्वः । उपसर्गस्थान्निमित्तादनितेर्नस्य णत्वं वाच्यम् ॥ प्राणिति । अन्यात् । अनितु । आनीत् आनत् । आन आनतुः आनुः । अन्यात् । अनिष्यति । आनिष्यत् । आनीत् आनिष्टाम् आनिषुः । जक्ष भक्ष हसनयोः । जक्षिति जक्षितः ॥ **जक्षादेरन्तोऽदन उस् । ३२ ।** जक्षजागृदरिद्राशासूचकासृभ्यः परस्य अन्त अत् अन उस् भवति ॥ जक्षति जक्षिपि । जक्ष्यात् । जक्षितु । अजक्षीत् अजक्षत् । जजक्ष । जक्ष्यात् जक्षिता । जक्षिष्यति । अजक्षिष्यत् । अजक्षीत् । जागृ निद्राक्षये । जागर्ति जागृतः जाग्रति जागर्षि । जागृयात् । जागर्तु—जागृतात् जागृताम् जाग्रतु । जागृहि-जागृताद्वा जागृतम् जागृत । जागराणि जागराव जागराम । गुणः ( प्र० १ सू० ११ ) दिस्योर्हसात् ( प्र० ४ सू० ६ ) स्रोर्विसर्गः ( वृ० १ प्र० ६ सू० ४ ) अजागः अजागृताम् ॥ **उसि जागतेर्धातो गुणो वक्तव्यः । ३३ ।** अजागरुः । अजागः अ-

**तदा जज्ञिर्महाश्चर्यं नेमिर्नृपगणोऽपि तम् ॥**
**तदा जज्ञिर्महाश्चर्यं नेमिर्नृपगणोऽपि तम् ॥**
**ब्राह्मणानां श्रुतिविदां गणो जग्मिर्धनं मुदा ॥२॥**

इति श्रीकृदन्तप्रक्रियायां शीलार्थप्रक्रिया ॥ ४ ॥

अथोणादयो निरूप्यन्ते ॥ **सदोणादयः । १ ।** सर्वस्मिन्काले उ-णादयः प्रत्यया भवन्ति ॥ **कृ वा पा जि मि स्वदि साधि अ-शूङ् एभ्य उण् प्रत्ययो भवति । २ ।** णकारो वृद्ध्यर्थः । क-रोतीति कारुः । कारुकः । वा गति० । आतो युक् ( प्र० १ सू० ६ ) वातीति वायुः । पा पाने । पातीति पायुः । जयति अनेनेति जायुः । डुमिञ् प्र०। मि कौटिल्ये । मिनोतीति मायुः । स्वदि आस्वादने । स्वद्यते इति स्वादुः साध्यतीति साधुः । अश्नोतीति आशुः ॥ **सि तनि गमि मसि सचि अवि हि धा क्रुशि एभ्यस्तुन्प्रत्ययो भवति । ३ ।** षिञ् बन्धने । सिनोतीति सेतुः । तनोतीति तन्तुः । गच्छतीति गन्तुः । मसि परिणामे रक्षणे च । मस्यतीति मस्तुः । षच संबन्धे । सचतीति सक्तुः अव रक्षणे । अवतेर्वकारस्य उकारः । अवतीति ओतुः । हि गतौ वृद्धौ च । हिनोतीति हेतुः । दधातीति धातुः । क्रुश आह्वाने । क्रुशिरोद च । क्रुश् आक्रोशे । छशषराजादेः षः ( वृ० १ प्र० ९ सू० ४४ ष्टुभिः ष्टुः ( वृ० १ प्र० ४ सू० ८ ) क्रोशतीति क्रोष्टा । अव रक्ष पालने च । कित्वात्संप्रसारणमुकारः ॥ **अवतेर्मुक् । ४ ।** अवतेर्धा मुक्प्रत्ययो भवति ॥ अवतीति ओम् ओमौ ओमः ॥ **अतिवृहिभ्य मनिण् । ५ ।** अत सातत्यगमने । सततं अततीति आत्मा वा अत अखिलजनान्तर्निवासित्वेन सुकृतदुष्कृतकर्माणि पश्यतीति आत्मा । बृ वृद्धौ ॥ **मन्युपधाया ऋः । ६ ।** मनिण्प्रत्यये परे उपधाया

कारस्य रेफो भवति ॥ बृंहतीति ब्रह्म ॥ **घृधृपदो मः । ७ ।** घृ क्षरणे दीप्तौ च । घरतीति वा घ्रियते इति घर्मः । धृ धारणे । धरतीति वा ध्रियतेऽसौ धर्मः । पद गतौ । पद्यते तत् पद्मम् ॥ **ऋ स्तु सु हृ हु मृक्षि क्षु भा मा या वा जक्ष रै नी श्यैङ् पद एभ्यो मः प्रत्ययो भवति । ८ ।** ऋ गतौ । ऋच्छतीति अर्मः नेत्ररोगः । स्तौतीति स्तोमः । षूङ् प्रसवे । सूतेऽसौ सोमः । हर्मः । जुहोतीति होमः। म्रियते इति मर्मः । क्षि निवासगत्योः । क्षयतीति क्षेमः । टुक्षु शब्दे । क्षौतीति क्षोमः । भातीति भामः । मामः ।यातीति यामः । वातीति वामः ।जक्ष भक्ष हसनयोः । जक्ष्मः । रायतीति रामः । नेमः । श्यैङ् दीप्तौ । श्यायतीति श्यामः । पद्मः। **भीध्वोर्वा मक् । ९ ।** बिभेत्यस्मादिति भीमः । धूयतेऽसौ धूमः ॥ **ध्वादेरुलिक् । १० ।** ध्वादेर्धातोरुलिक् प्रत्ययो भवति ॥ धूनोमि वा धूयतेऽसौ धूलिः । अगि लघि रघि गत्यार्थाः । इदितः । अङ्गते सा अङ्गुलिः ॥ **भविष्यदर्थे णिनिः । ११ ।** आगमिष्यतीति आगामी । भविष्यति भावी ॥ **शसादेः करणे त्रक् १२** शसादेर्धातोः करणेऽर्थे त्रक् प्रत्ययो भवति ॥ **सर्वधातुभ्यस्त्रमनौ । १३ ।** शस् हिंसायाम् । शंसति वा शस्यते अनेनेति शस्त्रम् । शास् अनुशिष्टौ । शिष्यते अनेनेति शास्त्रम् । असु क्षेपणे । अस्यते अनेनेति अस्त्रम् । पा पाने । पीयते अनेनेति पात्रम् । नीयते अनेनेति नेत्रम् । दा प्लवने । दीयते अनेनेति दात्रम् ॥ **युवहागिभ्यो निः १४** एभ्यो धातुभ्यो निः प्रत्ययो भवति ॥ यु मिश्रणे । यौतीति योनिः । वहतीति वह्निः । अङ्गतेऽसौ अग्निः॥ **इदिचदिशाकिरुदिभ्यो रः।१५।** एभ्यो रप्रत्ययो भवति ॥ इदि चदि आह्लादने दीप्तौ च ॥ इन्दतेऽसौ इ-

न्द्रः । चन्दतेऽसौ चन्द्रः । शक्नोतीति शक्रः । रोदितीति रुद्रः ॥ **पुष्पादेरः । १६ ।** पुष्पादेर्धातोरः प्रत्ययो भवति ॥ पुष्प विकसने । पुष्पति तत् पुष्पम् । फल निष्पत्तौ । फलति तत् फलम् । मूल व्याप्तौ । मूलति तत् मूलम् । रघ सामर्थ्ये ॥ **उप्रत्ययः । १७ ।** रघते शास्त्राणां शत्रूणां च अन्तं गच्छति प्राप्नोतीति रघुः ॥ **गमेर्डौः । १८ ।** गमेर्धातोर्डौः प्रत्ययो भवति ॥ गच्छतीति गौः ॥ **ग्लानुदिभ्यां डौः । १९ ।** ग्लायतीति ग्लौः । नुदतीति नौः । नुद प्रेरणे । ष्ट्यै स्त्यै शब्दसंघातयोः ॥ **स्त्यायतेर्ड्रट् । २० ।** डित्त्वाट्टिलोपः । संयोगान्तस्य लोपः ( वृ० १ प्र० ९ सू० ३ ) टित्त्वादीप् । स्त्यायति समूहं करोति सा स्त्री । लक्ष दर्शनाङ्कनयोः ॥ **लक्षतेरी मुट् च । २१ ।** लक्षतेर्धातोरीः प्रत्ययो भवति तस्य ईप्रत्ययस्य मुडागमश्च ॥ लक्ष्यते पुमान् अनया सा लक्ष्मीः ॥ **राजादेः कन् । २२ ।** राजादेर्धातोः कन् प्रत्ययो भवति ॥ राज् धन्व यु द्यु प्रतिदिव् वृष् तक्ष् दंश् पचि षप् अशूङ् नु मह एते राजादयः । राजृ दीप्तौ । राजतेऽसौ राजा । धन्व गतौ । धन्वतीति धन्वा । यु मिश्रणे । यौतीति युवा । द्यु गतौ । द्यौतीति द्युवा । प्रतिदीव्यतीति प्रतिदिवा । वृषु वृद्धौ । वर्षतीति वृषा । तक्षू तनूकरणे । तक्ष्णोतीति तक्षा । दंशन्तीति दश । पचि विस्तारे । पचि संख्याने । इदित् । जस्शसोर्लुक् ( वृ० १ प्र० ९ सू० ३२ ) पञ्चतीति पञ्च । षप् संबन्धे । षप् गणने । अशूङ् व्याप्तौ ॥ **षपेरशोः किति तुक् वक्तव्यः । २३ ।** सपन्ति ते सप्त । अश्नुवते इति अष्ट । णु स्तुतौ ॥ **अस्य गुणः । २४ ।** नुवन्ति ते नव । मह पूजायाम् ॥ **अस्य घान्तादेशो वुगागमश्च निपात्यते कन्प्रत्यये परे । २५ ।** मह्यते इति मघवा । इति राजा-

दयः ॥ **इस्मन्त्रासुकः सर्वधातुभ्यः । २६ ।** सर्वधातुभ्य इस् मन् त्र असुक् इत्येते प्रत्यया भवन्ति ॥ **वचादेरस् । २७ ।** वचादे-र्धातोरस् प्रत्ययो भवति वा सर्वधातुभ्योऽसुप्रत्ययः ॥ उच्यते इति वचः । मह्यते इति महः । पीङ् पाने । पीयते तत् पयः ॥ **पिबतेरसि । २८ ।** पिबतेर्धातोरसुन्प्रत्ययो भवति इकारान्तादेशश्च ॥ पीयते इति पयः । तिजू निशाने क्षमायां च । तितिक्षतीति तेजः । तप्यते इति तपः । रञ्ज रागे ॥ **असि नलोपो वाच्यः । २९ ।** रजते तत् रजः । रक्ष हिंसायाम् । रक्षतीति रक्षः ॥ **अर्चिरुचिशुचिहुसृपिछादिछृदिभ्य इस् प्रत्ययो भवति । ३० ।** अर्चिरुची दीप्तौ । अर्चतीति अर्चिः । गुणः । रोचिः । शोचिः । हूयते इति हविः । सर्पिः ॥ **छादेरिस्मन्त्रघञ्क्विप्सु ह्रस्वो वाच्यः । ३१ ।** छद संवरणे । चुरादिः । छादयतीति छदिः । उच्छृदिर्दीप्तिदेवनयोः । छृणत्तीति छर्दिः ॥ सर्वधातुभ्यस्त्रमनौ ( प्र० ९ सू० १३ ) तनु विस्तारे । तनोति तत् तन्त्रम् । मन ज्ञाने । मन्यते इति मन्त्रः । यम उपरमे । यच्छतीति यन्त्रः । छादि संवरणे । ण्यन्तः । छादयतीति छत्रम् । क्रियते तत्कर्म । वृञ् आच्छादने । वृणोतीति वर्म । मर्म । दाम । घर्म । छादयतीति छद्म ॥ **धनार्तिचक्षिङ्पॄवापितपिजनियजिभ्य उस् प्रत्ययो भवति । ३२ ।** धन शब्दे । धनतीति धनुः । ऋ गतौ । गुणः । अरुः । चक्षिङ् व्यक्तायां वाचि । चष्टे इति चक्षुः । पिपर्तीति परुः । वपतीति वपुः । तपतीति तपुः । जायते इति जनुः । यजतीति यजुः ॥ **अवतॄस्तॄञ्तन्त्रिकण्ठिभ्य ईः । ३३ ।** अवतीति अवीः । तरतीति तरीः । स्तॄञ् आच्छादने । स्तृणोतीति स्तरीः । तन्त्रि-

**हेर्वर्णविपर्ययश्च** । १० । चकारादः प्रत्ययः । हिनस्तीति सिंहः ॥ **मूर्तौ घनः** । ११ । मूर्तौ काठिन्ये परिच्छेदेऽर्थे चाभिधेये हन्तेरः प्रत्ययो भवति भावादौ हन्तेर्घनादेशश्च ॥ दधिकाठिन्यं हन्यते इति दधिघनः । परिच्छिन्नं सैन्धवं हन्यते इति सैन्धवघनः ॥ **हनो वधादेशश्चाप्रत्ययः** । १२ । हन्यते इति वधः ॥ **ट्वितोऽथुः** । १३ । ट्वितो धातोरथुः प्रत्ययो भवति भावादौ ॥ टुवेपृ कम्पने । वेप्यते अनेनेति वेपथुः । टुनदि समृद्धौ । नन्द्यते अनेनेति नन्दथुः । टुवप् वीजतन्तुसन्ताने । उप्यते इति वपथुः । टुक्षेपृ क्षेपणे । क्षेप्यते अनेनेति क्षेपथुः । टुओश्वि गतिवृद्ध्योः । श्वयथुः । टुक्षु शब्दे । क्षूयते इति क्षवथुः । टुवम् उद्गिरणे । वमथुः ॥ **ड्वितस्त्रिमक्** । १४ । ड्वितो धातोस्त्रिमक् प्रत्ययो भवति तेन धात्वर्थेन कृतेऽर्थे वाच्ये सति ॥ क्रियया निर्वृत्तः कृत्रिमः घटः । संभारेण संभृतं वा निर्वृत्तं संभृत्रिमं युद्धम् । पाकेन निर्वृत्तं पक्त्रिमं फलम् । याचनेन निर्वृत्तं याचित्रिमं किं विप्रधनम् ॥ **नङ्की** । १५ । धातोर्नङ्की इत्येतौ प्रत्ययौ भवतः भावादौ ॥ **यज् याच् यत् विच्छ प्रच्छ स्वप् एभ्यो नङ् प्रत्ययो भवति** । १६ । स्तोः श्चुभिः श्चुः ( वृ० १ प्र० ४ सू० ६ ) असंप्रसारणम् । इज्यते अनेनेति यज्ञः । याच्यते सा याच्ञा । यती प्रयत्ने । यत्यते तत् यतनं यत्नः ॥ **छः श्** १७ छकारस्य शकारादेशो भवति नप्रत्यये परे भावादौ ॥ शकारादेशः संप्रसारणबाधार्थः ॥ विच्छि गतौ । विच्छ्यते इति विश्नः । प्रच्छ ज्ञीप्सायाम् । प्रच्छ्यतेऽसौ प्रश्नः । रक्ष्यतेऽसौ रक्ष्णः । सुप्यते इति स्वप्नः ॥ **उपसर्गकर्माधारेषु दाधोः किः** । १८ । उपसर्गे कर्मण्युपपदे आधारे च दाधोः किः प्रत्ययो भवति ॥ अन्तर्धीयते इति अन्तर्धिः । आधिः ।

आदिः । विधिः । आधीयते तत् आधानं आधिः । आदीयते तत् आदानं आदिः । आतोऽनपि ( वृ० २ प्र० १ सू० १२८ ) इत्याकारलोपः । विधीयते तत् विधानं विधिः । संधीयते तत् संधानं संधिः । उदकं धीयतेऽस्मिन्निति उदधिः ॥ **उदकस्य । १९ ।** उदकशब्दस्य उदादेशो भवति अधिकरणे ॥ पयोधिः । अम्भो निधीयते यत्र स अम्भोनिधिः ॥ **भावे युट् । २० ।** धातोर्भावे युट् प्रत्ययो भवति ॥ युवोरनाकौ ( प्र० १ सू० ९ ) ज्ञायते तत् ज्ञानम् । क्रियते तत् करणम् । दीव्यते तत् देवनम् । दीयते तत् दानम् । भूष अलंकारे । भूष्यते तत् भूषणम् । ह्रियते तत् हरणम् । हूयते तत् हवनम् । उह्यते तत् वहनम् । भाष व्यक्तायां वाचि । भाष्यते तद्भाषणम् । दूष वैचित्त्ये । दूष्यते तत् दूषणम् । गीयते तत् गानम् । पीयते तत् पानम् । मीयते तत् मानम् ॥ **उदः स्थास्तम्भोः सलोपश्च । २१ ।** उदुपसर्गात्परयोः स्थास्तम्भयोः सकारस्य लोपो भवति ॥ उत्थीयते तत् उत्थानम् । स्तम्भ रोधने । उत्तम्भ्यते तत् उत्तम्भनम् ॥ **साधनाधारयोर्युट् । २२ ।** साधने आधारे चार्थे युट् प्रत्ययो भवति ॥ पच्यते अनेनेति पचनः अग्निः । पच्यतेऽस्यां स्थाल्यां सा पचनी स्थाली ॥ **ईषद्दुःसुषु खल्यू । २३ ।** ईषदादिषु प्रयुज्यमानेषु खल्यू इत्येतौ प्रत्ययौ भवतः भावादौ ॥ लकारः प्रत्ययभेदज्ञापनार्थः ॥ खकारो गुणविधानार्थः मुमागमार्थश्च ॥ ईषत्सु अकृच्छ्रार्थौ । दुःकृच्छ्रार्थः । ईषदनायासेन भूयते इति ईषद्भवः । दुर्भवः । सुभवः । ईषदनायासेन क्रियते इति ईषत्करः प्रपञ्चो हरिणा । दुःखेन क्रियते इति दुष्करः । सुखेन क्रियतेऽसौ सुकरः । ईषदाढ्यः क्रियते अनेनेति ईषदाढ्यङ्करः । दुराढ्यङ्करः ।

आढ्यङ्करश्चैत्रो भवता । ईषत् पीयते असौ ईषत्पानः सोमो भवता । दुष्पानः । सुपानः । युधि संप्रहारे । दुःखेन योधयितुं शक्यः दुर्योधनः । सुखेन योधयितुं शक्यः सुयोधनः । ईषत् शासनः । दुःखेन शासयितुं शक्यः दुःशासनः । सुशासनः ॥ इति कृदन्ते भावाधिकारप्रक्रिया ॥ ६ ॥

अथ कृत्यप्रक्रिया ॥ "तव्यादीनां कृत्यसंज्ञा पाणिनीयानाम्" । कृत्यादि भावकर्मणोरेव ॥ **तव्यानीयौ । १ ।** धातोस्तव्यानीयौ प्रत्ययौ भवतः भावादौ ॥ एध वृद्धौ । एध्यते वा एधितुमर्हं एधितव्यं एधनीयं धनं त्वया । भावस्यैकत्वादेकवचनं नपुंसकत्वं च । भूयते वा भवितुमर्हं भवितव्यं भवनीयम् । क्रियते वा कर्तुमर्हं कर्तव्यं करणीयम् । आस्यते वा आसितुमर्हं आसितव्यं आसनीयम् । कर्तव्यः करणीयो वा धर्मस्त्वया । या प्रापणे । प्रयातुमर्हं प्रयातव्यं प्रयाणीयम् । ईटो ग्रहाम् ( वृ० २ प्र० १ सू० १४० ) गृह्यते तत् ग्रहीतव्यम् ग्रहणीयम् । वृङ् संभक्तौ । व्रियते वा वरितुं योग्यं वरितव्यम् वरीतव्यम् वरणीयम् । वृञ् वरणे । व्रियते तत् वरितव्यम् वरीतव्यम् वरणीयम् ॥ **स्वराद्यः । २ ।** स्वरान्ताद्धातोर्यः प्रत्ययो भवति भावादौ ॥ चीयते वा चेतुमर्हं चेयम् । नेयम् । जेयम् । भीयते तत् भेयम् ॥ **असरूपोऽपवादः प्रत्ययोऽस्त्रियां वा बाधकः सरूपस्तु नित्यम् । ३ ।** चीयते वा चेतुमर्हं चेतव्यम् चयनीयम् । चिकीर्ष्यते वा चिकीर्षितुमर्हं चिकीर्ष्यम् । दातुमिच्छतीति दित्सति वा दित्स्यते इति दित्स्यम् ॥ **क्षय्यजय्यौ शक्यार्थे निपात्येते ।४।** क्षेतुं शक्यं क्षय्यम् । जेतुं शक्यं जय्यम् । अन्यत्र क्षेयं पापं जेयं मनः । क्षय्यजय्यौ चेति चकारादजर्यमिति निपात्यते । न

जीर्यतीत्यजर्यं संगतम् ॥ **इच्चात्तः । ५ ।** अकारान्ताद्धातोर्यः प्रत्ययो भवति आकारस्य च इकारादेशः ॥ दीयते वा दातुमर्हं देयम् । ज्ञातुं योग्यं ज्ञेयम् । गीयते तत् गेयम् । ग्लेयम् । पातुमर्हं पेयम् । धीयते तत् धेयम् ॥ **पुशकात् । ६ ।** अकारोपधात् पवर्गान्तात् शकादेश्च यः प्रत्ययो भवति भावादौ ॥ शप् उपालम्भे आक्रोशे च । शप्यते इति शप्यम् । जप्तुं योग्यं जप्यम् । सरूपत्वात् पक्षे न घ्यण् । शक्यम् । शक् सह गद् मद् चर् यम् तक् शस् चत् यत् पत् जन् हन् शल् रुच् एते शकादयः । षह मर्षणे । सोढुं शक्यं सह्यम् । सह्यते वा सोढुमर्हं सह्यम् । गद्यते वा गदितुमर्हं गद्यम् । मद्यते वा मदितुमर्हं मद्यम् । चरितुमर्हं चर्यम् । यम्यम् । तक् हसने । तक्यते वा तकितुमर्हं तक्यम् । शसु हिंसायाम् । शसितुमर्हं शस्यम् । चते माने । चते कान्तौ । चत्यते इति चत्यम् । यत्यम् । पत्यम् । जन्यम् ॥ **हनो वधादेशो ये । ७ ।** हन्यते वा हन्तुमर्हं वध्यम् । शल् शोभायाम् । शल्यम् । रोचितुं शक्यं रुच्यम् । डुलभष् प्राप्तौ । लब्धुं योग्यं लभ्यम् । यभ् मैथुने । यब्धुं शक्यं यभ्यम् । शक् सामर्थ्ये । शक्ऌ शक्तौ । शक्यते तत् शक्यम् ॥ **ऋहसात् घ्यण् । ८ ।** ऋवर्णान्ताद्धसान्ताच्च धातोर्घ्यण् प्रत्ययो भवति भावादौ ॥ घकारो घित्कार्यार्थः । णकारो वृद्ध्यर्थः । क्रियते वा कर्तुमर्हं कार्यम् । वृञ् वरणे । व्रियते तत् वार्यम् । धार्यम् । चार्यम् । हस् हसने । हास्यम् । ह्रियते तत् हार्यम् । हनो घत् ( वृ० २ प्र० २७ सू० ९ ) हन्यते तत् घात्यम् । चजोः कगौ घिति ( प्र० ४ सू० २१ ) पक्तुं योग्यं पाक्यम् । याच्यते तत् याच्यम् । रुच्यते तत् रोच्यम् । वच परिभाषणे ॥ **वचेः शब्दसंज्ञायां कुत्वं वाच्यम् । ९ ।** तेन

वाक्यम् । अन्यत्र वाच्यम् ॥ **यज्याच्वच्रुच्प्रवच्अर्चत्यज्पूज्गर्ज्भुजां घ्यणि कुत्वाभावः । १० ।** याज्यम् । याच्यम् । वाच्यम् । रोच्यम् । प्रवाच्यम् । अर्च्यम् । त्याज्यम् । पूज्यम् । गर्ज शब्दे । गर्ज्यते तत् गर्ज्यम् । भुज्यते तत् भोज्यम् । बाध् हिंसायाम् । बाधितुं योग्यं बाध्यम् । भजितुं योग्यं भाज्यम् ॥ **ओरावश्यके घ्यण् । ११ ।** उवर्णान्ताद्धातोरावश्यकेऽर्थे घ्यण् प्रत्ययो भवति ॥ **ओदौतोर्यः प्रत्ययः स्वरवत् । १२ ।** धातोरोकारौकारयोर्निमित्तं वा संबन्धी यः प्रत्ययः स स्वरवत् स्यात् ॥ समासे अवश्यमादीनामन्तलोपमिच्छन्ति शाब्दिकाः ॥

**लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि ॥**
**समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥ १ ॥**

लूञ् छेदने । लूयते वा लवितुं योग्यः लाव्यः । अवश्यं लाव्यो अवश्यलाव्यः । भोक्तुं कामो यस्य स भोक्तुकामः । श्रोतुं मनो यस्य स श्रोतुमनाः । सम्यक्प्रकारेण हितं सहितं-संहितम् । संततं-सततम् । मांसस्य पचनं मांसपचनम् । युड्घञोः पचि परे मांसस्याकारो वा लुम्पेत् । मांसस्य पचनं मांस्पचनम् । मांसस्य पाकः मांस्पाकः मांसपाकः ॥ **ऋदुपधात् क्यप् । १३ ।** ऋकारोपधाद्धातोः क्यप् प्रत्ययो भवति भावकार्ययोः । कृती छेदने । कर्तितुमर्हं कृत्यम् । नितरां कर्तितुं योग्यं निकृत्यम् । वृद्धचम् । वृत्यते तत् वृत्यम् ॥ **कृपिचृत्योर्न क्यप् । १४ ।** कृपू सामर्थ्ये । कृपो रो लः ( वृ० २ प्र० २ सू० २० ) कल्प्यम् । चृत दीप्तौ । चर्त्यम् ॥ **मृजो वा क्यप् । १५ ।** मृज्यं मार्ग्यम् ॥ **ह्रस्वाच्च क्यप् । १६ ।** ह्रस्वान्ताद्धातो-

भावे क्यप् प्रत्ययो भवति ॥ तस्य ग्रहणे तदन्तस्य ग्रहणम् । क्रियते तत्कृत्यम् ॥ **कृञः क्यपि वा रिङ् वक्तव्यः तुगभावश्च । १७ ।** कृत्या क्रिया ॥ **ङिदनेकाक्षरोऽप्यादेशस्तदन्तस्यैव वक्तव्यः । १८ । गुप्गुहोः क्यप् । १९ ।** गोप्तुं योग्यं गुप्यम् । गूहितुं योग्यं गुह्यम् ॥ **वदः क्यप् भावादौ । २० ।** वदेर्धातोः क्यप् प्रत्ययो भवति भावादौ ॥ मृषा उद्यते इति मृषोद्यम् । ब्रह्मणा उद्यते या कथा सा ब्रह्मोद्या ॥ **ग्रहेः क्यप् । २१ ।** अर्जुनगृह्या सेना ॥ **भुवो भावे क्यप् । २२ ।** नाम्नि उपपदे भुवो भावे क्यप् प्रत्ययो भवति ॥ ब्रह्मणो भावः ॥ ब्रह्मभूयं गतः । ब्रह्मणा भूयते तत् ब्रह्मभूयं गतः । नाम्नि किम् । भवितव्यं भव्यम् ॥ **इण् स्तु वृ दृ भृ शास् जुष् खन् एभ्यः क्यप् वाच्यः । २३ ।** तुक् । ईयते इति इत्यः । स्तुत्यः । वृत्यः । दृङ् आदरे । दृत्यः । भृत्यः । शासेरिः ( वृ० २ प्र० ४ सू० ३७ ) शिष्यः । जुष् प्रीतिसेवनयोः । जुष्यः ॥ **खन एत्वं क्यपि वाच्यम् । २४ ।** खन्यते इति खेयम् ॥ **भिद्योध्यौ नदे निपात्येते । २५ ।** भिनत्ति कूलमिति भिद्यः । उज्झ उत्सर्गे । उज्झति जलमिति उद्ध्यः नदः । नदे किम् । भेत्ता उज्झिता ॥ **कृवृष्योर्वा क्यप् । २६ ।** क्रियते तत् कृत्यम् । कर्तुं योग्यं कार्यम् । वृष वृष्टौ । वृष्यम् । वर्ष्यम् ॥ **एते भावकार्ययोर्विहितास्तव्यादयस्तेऽर्हविधौ च वक्तव्याः । २७ ।** रारोङ्गसे दृशाम् ( वृ० २ प्र० १ सू० ११९ ) दर्शनार्हो द्रष्टव्यः । द्रष्टुं अर्हः दर्शनीयः-दृश्यः । इङ् अध्ययने । स्वाध्यायोऽध्येतव्यः । स्वाध्यायो नाम वेदः । श्रु श्रवणे । श्रवणार्हः श्रोतव्यः । श्रोतुं योग्यं श्रवणीयम् । मान्

पूजायाम् । मानितुं योग्यो मानितव्यः-माननीयः । ध्यै चिन्तायाम् । ध्यानार्हो ध्यातव्यः । ध्यातुं योग्यो ध्यानीयः । मन ज्ञाने । मननार्हो मन्तव्यः । मन्तुं योग्यो मननीयः ॥ **सप्रत्ययान्तादपि एते प्रत्यया भवन्ति । २८ ।** नितरां ध्यातुमेष्टव्यो निदिध्यासितव्यः । भवितुमेष्टव्यो बुभूषितव्यः बुभूषणीयः । तव्यानीयौ क्यब्ण्यण्याः ॥

**कृत्याः पञ्च समाख्याता घ्यण्क्यपौ भावकर्मणोः ॥**
**तव्यानीयौ स्वराद्यश्च शब्दशास्त्रविचक्षणैः ॥ २ ॥**

॥ इति कृत्यप्रक्रिया ॥ ७ ॥

अथ क्यधिकारः ॥ **स्त्रियां यजां भावे क्यप् । १ ।** यजादेर्धातोः स्त्रियां भावे क्यप् प्रत्ययो भवति ॥ यज् व्रज् समज् निषद् निपत् मन् नम् विद् षुञ् शीङ् भृञ् इण् कृ इषु परिसृप परिचर अटाट्य आस् चर् जागृ हन् एते यजादयः ॥ कित्त्वात्संप्रसारणम् ॥ इज्यते सा इज्या । स्त्रीत्वादाप् । व्रज्यते सा व्रज्या । अज गतौ क्षेपणे च । समज्यते सा समज्या शिविका । प्रकर्षेण व्रज्यते अस्यामिति प्रव्रज्या । षद् विशरणगत्यवसादने । निषद्यते सा निषद्या । निपत्या । मन ज्ञाने । मन्यते सा मन्या । नम्या । विद्यते सा विद्या । सुत्या ॥ **शीङोऽयङ् ङ्किति ये वक्तव्यः । २ ।** शय्या । भृत्या । ईयते सा इत्या । कृत्या ॥ **कृञो यक् वा वाच्यः । ३ ।** अयकि । क्रियते सा क्रिया ॥ **इषेश्छान्तादेशो यलोपश्च । ४ ।** इष्यते सा इच्छा । **सरतेर्गुणः । ५ ।** परिसर्या । परिचर्या । अटाट्या । आस्या । चर्या । **जागर्तेर्गुणः । ६ ।** जागर्या । हनस्तकारान्तादेशो हिंसायामर्थे । हन्यते सा हत्या ॥ **हन्तेस्तः । ७ ।** हन्तेर्नकारस्य तकारादेशो भवति

क्यपि स्त्रियाम् ॥ ब्रह्म हन्यते इति ब्रह्महत्या ॥ **स्त्रियां भावे क्तिः । ८ ।** धातोः स्त्रियां भावे क्तिः प्रत्ययो भवति ॥ क्रियते सा कृतिः । बुद्ध्यते सा बुद्धिः । स्मृङ् चिन्तायाम् । स्मर्यते सा स्मृतिः । पच्यते सा पक्तिः । पचि विस्तारे । पञ्च्यते तत् पञ्चनं पङ्क्तिः । संप्रसारणं । उह्यते सा ऊढिः । संविद्यते संवित्तिः ॥ **शमां दीर्घः । ९ ।** शमादीनां दीर्घो भवति क्तिप्रत्यये परे ॥ शम्यते सा शान्तिः । दम्यते सा दान्तिः । गम्यते सा गतिः । हन्यते सा हतिः । भ्रमु चलने । भ्रम्यते सा भ्रान्तिः । अनुभूयते तत् अनुभवनं अनुभूतिः । विशिष्टा भूतिः विभूतिः । प्रभूतिः । भवनं भूतिः । शुद्ध शौचे । शोधनं शुद्धिः ॥ **ईशशीङोर्वरक्तिप्रत्ययौ नेड्गुणश्च । १० ।** ईशशीङोर्वरक्तिप्रत्ययौ स्तो वरप्रत्ययस्य च इट् न । शीङो गुणोऽपि न भवति ॥ ईष्टेऽसौ ईश्वरः । संशय्यते तत् संशयनम् संशीतिः । ह्री गतौ । ह्रीयते इति ह्रीतिः । जागरणं जागृतिः । निगृह्यते सा निगृहीतिः । कुच संकोचने । कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु । तुदादिः । निकुचितिः । निपठितिः । स्निह् आस्कन्दने । उपस्निहितिः । निपतितिः । विशेषेण ध्रियते सा विधृतिः ॥ **ग्लाम्लाज्याहाकृत्वरिभ्यः क्तेरर्थे निः प्रत्ययो भवति । ११ ।** ग्लायते सा ग्लानिः । ज्यानिः । हानिः । ञित्वरा संभ्रमे ॥ **त्वरतेर्वस्य उत्वं वाच्यम् । १२ ।** त्वर्यते सा तूर्णिः । **कॄल्वादिभ्यश्च क्तेरर्थे निः प्रत्ययो भवति । १३ ।** ॠत इर् ( वृ० २ प्र० १ सू० १३९ ) कीर्यते सा कीर्णिः । लूनिः । धूनिः । पूर्णिः ॥ **संपदादेः क्विप् वा वाच्यः । १४ ।** संपत् संपत्तिः ॥ **कर्तरि क्तिश्च संज्ञायाम् । १५ ।** कर्त्रर्थे धातोः क्तिः

प्रत्ययो भवति संज्ञायां विषये ॥ डुकृञ् करणे । प्रकुरुते सा प्रकृतिः । धृञ् धारणे । विपूर्वः विशेषेण धरतीति विधृतिः ॥ षिद्भिदामङ् । १६ । षितो धातोर्भिदादेश्च स्त्रियामङ् प्रत्ययो भवति भावादौ ॥ पच्यते सा पचा । मृज्यते सा मृजा । जृषु वयोहानौ ॥ जरादौ ङानुबन्धरहितः अः प्रत्ययो भवति । १७ । जीर्यत्यनया सा जरा ॥ इषु इच्छायामिति निर्देशाज्ज्ञापकादिच्छा इत्यादि निपात्यते । इच्छा ॥ इषादेरङर्थे युट् । १८ । एषणमिति एषणा । भिद्यते अनया सा भिदा । छिद्यतेऽनया सा छिदा । क्षिपा । गुहू संवरणे । गुहा । मेधृ हिंसायाम् । मेधृ वधमेधासंगमेषु । मेध्यते इति मेधा । कृपा । पीड बाधायाम् । पीडा । बाध पीडायाम् । बाधा । क्षपा रात्रिः ॥ गुरोर्हसात् । १९ । गुरुमतो हसान्ताद्धातोः स्त्रियामङ् प्रत्ययो भवति भावादौ न क्तिः ॥ ईह चेष्टायाम् । ईह्यते सा ईहा । ऊह्यते सा ऊहा । ईक्ष दर्शनाङ्कनयोः । ईक्ष्यते तत् ईक्षणं ईक्षा । एध्यते सा एधा । गुरोः किम् । भक्तिः ॥ हसात्किम् । नीतिः । लिख् रिख् लेखने । लिख्यते तल्लेखनं लेखा । रिख्यते तद्रेखणं रेखा । गुध परिवेष्टने । गुध्यते इति गोधा । धेट् पाने । सुष्ठु धीयते इति सुधा । डुधाञ् धारणपोषणयोः । श्रद्धीयते सा श्रद्धा ॥ क्तिरापादिभ्यः । २० । आप्तिः । दीप्यते सा दीप्तिः । राध्यते सा राद्धिः । प्रशास्तिः ॥ प्रत्ययान्तात् । २१ । प्रत्ययान्ताद्धातोः स्त्रियामङ् प्रत्ययो भवति भावादौ ॥ चिकीर्ष्यते सा चिकीर्षा । आत्मनः कर्तुमिच्छा चिकीर्षा । आत्मनः पुत्रेच्छा वा पुत्रीयते सा पुत्रीया । अशितुमिच्छा अशनाया । लोलूयते सा लोलूया । अटाट्या । कण्डूञ् गात्रविघर्षणे । कण्डूयते सा कण्डूया । मुमूर्षणं मुमूर्षा ॥ इकश्तिपौ धातुनिर्दे-

**श्रे । २२ ।** धातुनिर्देशे वाच्ये सति इक्श्तिपौ प्रत्ययौ भवतः ॥ शकारः शिति चतुर्वत्कार्यार्थः । पच् इत्ययं धातुः पचिः । श्रयतिः । पचतिः । भवतिः ॥ **क्यन्तआम्ग्रन्थ्अर्थश्रन्थघट्टविद्वदिइषिभ्यः स्त्रियां युर्वाच्यः । २३ ।** डुकृञ् करणे । युवोरनाकौ ( प्र० १ सू० ९ ) कारणा । आसना । अर्थ याच्ञाप्रकाशनयोः । अर्थना । ग्रन्थ संदर्भे । ग्रथ्यते तद्ग्रन्थनमिति ग्रन्थना । उपासनमिति उपासना । श्रथि शैथिल्ये । श्रन्थना । घटनमिति घटना । विद्यते वेदनमिति वेदना । वन्द्यते सा वन्दना । एषणमिति एषणा ॥ **इञ् अजादिभ्यः । २४ ।** अज गतौ । आजिः । अत सातत्यगमने आतिः ॥ **इक् कृष्यादिभ्यः । २५ ।** भावादौ ॥ कृष्यते सा कृषिः । गिरिः । किरिः । सर्वधातुभ्य इः । कविः । रविः ॥ ॥ इति स्त्र्यधिकारप्रक्रिया ॥ ८ ॥

अथ त्कादयः प्रत्ययाः ॥ **पूर्वकाले त्का । १ ।** धातोः त्काप्रत्ययो भवति पूर्वकाले समानकर्तृके धातौ प्रयुज्यमाने ॥ देवदत्तः स्नात्वा भुङ्क्ते । भुक्त्वा व्रजति ॥ **न त्का सेट् । २ ।** सेट् त्का किन्न भवति ॥ वर्तित्वा । शपित्वा । भवित्वा । सेट् किम् । कृत्वा ॥ **रलो व्युपधाद्धलादेः संश्च । ३ ।** उश्च इश्च वी ते उपधे यस्य तस्माद्धलादे रलन्तात्परौ त्कासनौ सेटौ वा कितौ स्तः ॥ विद ज्ञाने । विदित्वा-वेदित्वा ॥ लिखित्वा । द्युतित्वा । व्युपधात्किम् । वर्तित्वा । रलः किम् । सेवित्वा । हलादेः किम् । एषित्वा । सेट् किम् । भुक्त्वा ॥ **मृडमृदगुधगुहकुषक्लिशवदवसमुषग्रहिभ्यः । ४ ।** सेट् किद् भवति ॥ मृड सुखने । मृडित्वा । मृद क्षोदे । मृदित्वा । गुध् रोचने । गुध् रोषे । गुधित्वा । गुह रोगे । गुहू संवरणे । गुहित्वा । कुष् निष्कर्षे कु-

षित्वा । क्लिशू विबाधे । क्लिशित्वा । वद व्यक्तायां वाचि । उदित्वा । वसू निवासे । उषित्वा । मुषित्वा । गृहीत्वा ॥ **नोपधात्थफान्ताद्वा कित् । ५ ।** नकारोपधात् थफान्ताद्धातोः सेट् त्का वा किद्भवति ॥ ग्रन्थ संदर्भे । नो लोपः ( वृ० २ प्र० १ सू० ६१ ) ग्रथित्वा-ग्रन्थित्वा । गुम्फ ग्रन्थने । गुफित्वा-गुम्फित्वा । इत्यादि ॥ **अलंखल्वोः प्रतिषेधे त्का । ६ ।** प्रतिषेधार्थयोरलंखलुशब्दयोः पूर्वपदयोः सतोः पूर्वकालं विनापि त्का प्रत्ययो भवति । अत्रालंखलुशब्दौ निषेधार्थौ तयोरुपपदत्वात् । अलं भुत्का न भोक्तव्यम् । भोजनं मा कुरु इत्यर्थः । खलु भुत्का न भोक्तव्यम् ॥ **उदितः त्का वेट् । ७ ।** उदितो धातोः परस्य त्काप्रत्ययस्य वा इडागमो भवति ॥ एषित्वा-इष्ट्वा । भ्रमु चलने । भ्रमित्वा-भ्रान्त्वा । अदो जघ्धः ( प्र० २ सू० २१ ) जग्ध्वा ॥ **समासे क्यप् । ८ ।** समासे सति पूर्वकाले क्यप्प्रत्यो भवति तत्कर्तृके धातौ प्रयुज्यमाने ॥ ह्रस्वस्य पिक्ति तुक् (प्र० १ सू० ६०) डुभृञ् धारणपोषणयोः । संभृत्वा करोतीति संभृत्यकरोति । णमु प्रह्वत्वे शब्दे च । प्रकर्षेण कायवाङ्मनोभिर्नत्वा इति प्रणम्य । अनञ्पूर्व इत्येके । अकृत्वा जल्पति । अकृत्वा गच्छति ॥

**अजित्वा शात्रवान्सर्वानकृत्वा विमलं यशः ॥**
**अदत्वा वित्तमर्थिभ्यः कथं जीवन्ति भूभृतः**

**क्यपि ञेर्गुणश्च ॥ ९ ॥** क्यपि लघुपूर्वस्य ञेरयादेशोऽपि वाच्यः ॥ परिणमयित्वा इति परिणमय्य भुङ्क्ते । विगमय्य । विगणय्य । अलघुपूर्वस्य न । तेन ञेर्लोपो वाच्यः । प्रतार्य । संप्रधारयित्वा इति संप्रधार्य । विचार्य करोति । आप्लृ व्याप्तौ । आप्नोतेर्वा । प्रापय्य-प्राप्य ॥

**दादीनां क्यपि इत्वाभावो वाच्यः । १० ।** क्यपि स्थामि इति ईकारो न भवति ॥ दो अवखण्डने । प्रदाय । प्रसाय । प्रमाय । प्रस्थाय । उप समीपे स्थित्वा इति उपस्थाय । पिबतेर्वा-प्रपाय प्रपीय । लोपस्त्वनुदात्ततनाम् ( वृ० २ ४ सू० ७ ) ॥ **जमस्यक्यपि वा लोपः । ११ ।** प्रकर्षेण नत्वा इति प्रणम्य प्रणत्य । आसमन्तात् ग्रामे आगम्य आगत्य ॥ **विपूर्वस्य दधातेः करोतेरर्थे क्यप् । १२ ।** विधाय । प्रहाय ॥ **तत्कालेऽपि क्यप् दृश्यते । १३ ।** नेत्रे निमील्य हसति । मील संमीलने । मील संगमे । उभयपदी । अक्षिणी संमीलित्वा इति अक्षिणी संमील्य हसति । चक्षुषी संमील्य हसति । मुखं व्यादत्त्वा इति मुखं व्यादाय स्वपिति ॥ **पौनःपुन्ये णमूपदं द्विश्च । १४ ।** समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले पौनःपुन्यार्थे धातोर्णम् प्रत्ययो भवति णमन्तस्य पदस्य द्विर्वचनं भवति ॥ आतो युक् ( प्रत्य० १ सू० ६ ) पीत्वा पीत्वा इति पायं पायं गच्छति । आदरे वीप्सायां द्विर्भावः । भुक्त्वा भुक्त्वा इति भोजं भोजं व्रजति । स्मृत्वा स्मृत्वा इति स्मारं स्मारं नमति शिवम् ॥ **कथमादिषु स्वार्थे कृञो णम् । १५ ।** कथं इत्थं अन्यथा एवं एतेषु प्रयुज्यमानेषु स्वार्थे कृञो णम् प्रत्ययो भवति ॥ कथंकारं इत्थंकारं अन्यथाकारं एवंकारं पठति । एवं पठतीत्यर्थः । **समूलाकृतजीवेषु हन्कृञ्ग्रहां णम् वाच्यः स्वार्थे तेषामनुप्रयोगश्च । १६ ।** समूलघातं हन्ति । अकृतकारं करोति । जीवं गृहीत्वा इति जीवग्राहं गृह्णाति । इत्यादि ॥ **वर्णात्कारः । १७ ।** वर्णमात्रात्कारः प्रत्ययो भवति ॥ क इति वर्णः ककारः । व इति वर्णो वकारः । अ इति वर्णः अकारः । वर्णस-

मुदायादपि कारो दृश्यते । अहंकारः । ओंकारः । टकारः । पकारः तकारः । इत्यादि ॥ **रादिफो वा । १८ ।** र इति वर्णः रेफः-रकारः

**रकारादीनि नामानि श्रुत्वा तत्रास रावणः ॥**
**रत्नानि च रमण्यश्च संत्रासं जनयन्ति मे ॥ २ ॥**
**रकारादीनि नामानि शृण्वतो मम पार्वति ॥**
**मनः प्रसन्नतामेति रामनामाभिशङ्कया ॥ ३ ॥**

**लोकाच्छेषस्य सिद्धिर्यथा मातरादेः ॥ १९ ॥** अस्य सारस्वतव्याकरणस्य ये शेषप्रयोगास्तेषां लोकात् अन्यव्याकरणात्सिद्धि र्भवति यथा मातरादेः । इत्यादिप्रयोगानुसारेण बोद्धव्यम् ॥

**स्वरूपान्तोऽनुभूत्यादिः शब्दोऽभूद्यत्र सार्थकः ॥**
**स मस्करी शुभां चक्रे प्रक्रियां चतुरोचिताम् ॥४॥**
**अवताद्वो हयग्रीवः कमलावर ईश्वरः ॥**
**सुराऽसुरनराकारमधुपापीतपत्कजः ॥ ५ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्याऽनुभूतिस्वरूपाचार्यविरचितायां कृदन्तप्रक्रियायां त्क्वादिप्रत्ययप्रक्रिया समाप्ता ॥ ९ ॥ समाप्ता चेयं तृतीया वृत्तिः ॥ ॥ श्रीलक्ष्मीनृसिंहार्पणमस्तु ॥ श्रीरस्तु ॥

॥ श्रीः ॥

# अष्टाध्यायीसूत्रपाठः ।

अइउऋऌ । एऐ ओ औ । हयवरल । ञणनङम । झढधघभ । जडदगब । खफछठथ । चटतकप । शषस । इति प्रत्याहार सूत्राणि ॥

## प्रथमोऽध्यायः ।

### प्रथमः पादः ।

॥ ॐस्वस्तिश्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुभ्योनमः ॥

वन्देब्रह्मशिवंवन्देवन्देदेवींसरस्वतीं । लक्ष्मींवन्देहरिंवन्देवन्देसिद्धार्थदेवताम् ॥ १ ॥ संज्ञासंधिर्विभक्तिश्चयुष्मदस्मच्चकारकम् । तद्धितस्त्रीसमासाश्चदशधाख्यातमुच्यते ॥ २ ॥

अथातः १ अइउऋऌ समानाः १।१।१ प्रत्याहाराय १।१।२ ह्रस्वदीर्घप्लुतभेदाः सवर्णाः १।१।३ ऋऌवर्णौच १।१।४ इतिसमानपादःप्रथमः॥१॥ वर्ग्योवर्ग्येण च १।२।१ कुचुटुतुपुवर्गाः १।२।२ एऐओऔ संध्यक्षराणि १।२।३ उभये स्वराः १।२।४ अवर्ज्या नामिनः १।२।५ इतिसंध्यक्षरपादोद्वितीयः॥२॥ हयवरल १।३।१ ञणनङम १।३।२ झढधघभ १।३।३ जडदगब १।३।४ खफछठथ १।३।५ चटतकप १।३।६ शषस १।३।७ आद्यंताभ्याम् १।३।८ इतिप्रत्याहारपादस्तृतीयः ॥ ३ ॥ हसा व्यञ्ज-

नानि १।४।१ स्वरानन्तरिताहसाःसंयोगः १।४।२ स्वरहीनम् व्यञ्जनम् १।४।३ इतिहसपादश्चतुर्थः ४ ॥ इतिश्रीसरस्वतीदत्तवरदसारस्वत-अष्टाध्यायीसंज्ञाप्रकरणाख्यः प्रथमोऽध्यायः समाप्तः ॥ १ ॥ इयं स्वरे २।१।१ उवम् २।१।२ ऋरम् २।१।३ लृलम् २।१।४ ए अय् २।१।५ ओ अव् २।१।६ ऐ आय् २।१।७ औ आव् २।१।८ य्वोर्लोपश्चापदान्ते २।१।९ लोपशि पुनर्न संधिः २।१।१० वर्णविरोधः २।१।११ एङोतोऽतः २।१।१२ ङस्य २।१।१३ सवर्णेदीर्घस्सह २।१।१४ अइए २।१।१५ उओ २।१।१६ ऋअर् २।१।१७ लृअल् २।१।१८ एऐ ऐ २।१।१९ ओऔ औ २।१।२० इतिद्वितीयेस्वरपादःप्रथमः १ ॥ नामी २।२।१ य्वे द्वित्वे २।२।२ औ निपातः २।२।३ प्लुतः २।२।४ दूरादाह्वाने च टेः प्लुतः २।२।५ विचारे च २।२।६ अन्त्यस्वरादिः २।२।७ इतिद्वितीयेप्रकृतिभावपादोद्वितीयः ॥ २ ॥ चपा अबे जबाः २।३।१ ञमे ञमा वा २।३।२ चपाच्छःशः २।३।३ होझभाः २।३।४ स्तोः श्चुभिः श्चुः २।३।५ न शात् २।३।६ ष्टुभिः ष्टुः २।३।७ न षि २।३।८ टोरन्त्यात् २।३।९ तोर्ल्लिलः २।३।१० नः शक् छते २।३।११ शे चक् वा २।३।१२ मित्रवदागमः २।३।१३ ङ्णोह्रस्वाद्विः स्वरे २।३।१४ छः २।३।१५ हसेऽर्हहसः २।३।१६ राद्यपोद्विः २।३।१७ मोऽनुस्वारः २।३।१८ शत्रुवदादेशः २।३।१९ नश्चापदान्ते झसे २।३।२० यमायपेस्य २।३।२१ वा पदान्ते २।३।२२ इतिद्वितीयेव्यञ्जनपादस्तृतीयः ३ ॥ विसर्जनीयस्य सः २।४।१ शसे वा २।४।२ कुप्वोः ᳲ क ᳲ पौ वा २।४।३ अतोऽत्युः २।४।४ हवे २।४।५ आदवेलोपश्च २।४।६ स्वरे यत्वम्

२।४।७ भोसः २।४।८ नामिनोरः २।४।९ रः२।४।१० खपे वा २।४।११रिलोपोदीर्घश्च २।४।१२ सैषाद्धसे २।४।१३ इतिद्वितीयेवि-सर्गपादश्चतुर्थः ४ ॥ इतिश्रीसरस्वतीदत्तवरदसारस्वत अष्टाध्यायीसंध्याख्यो द्वितीयोऽध्यायः २ ॥ सप्तविभक्तयएकद्विबहुवचनानीत्यधिकारः ३।१।१ अविभक्ति नाम ३।१।२ कृत्तद्धितसमासाश्च ३।१।३ तस्मात् सि औ जस् १ अम् औ शस् २ टा भ्याम् भिस् ३ ङे भ्याम् भ्यस् ४ ङसि भ्याम् भ्यस् ५ ङस् ओस् आम् ६ ङि ओस् सुप् ७ ॥ ३।१।४ सा द्विधा ३।१।५ समानाद्धेर्लोपोधातोः ३।१।६ अम्शसोरस्य ३।१।७ सोनः पुंसः ३।१।८ नुडामः ३।१।९ रः संख्यायाः ३।१।१० ष्णः ३।१।११ जस्शसोर्लुक् ३।१।१२ डतेश्च ३।१।१३ अष्टनोडौ वा ३।१।१४ वा सु ३।१।१५। रैस्मि ३।१।१६ अद्भि ३।१।१७ ब्भ्यः ३।१।१८ एस्भि बहुत्वे ३।१।१९ ओसि ३।१।२० ङसिरत् ३।१।२१ ङस्स्य ३।१।२२ टेन ३।१।२३ ङेरक् ३।१।२४ सर्वादेः स्मट् ३।१।२५ अतः ३।१।२६ ङि स्मिन् ३।१।२७ जसी ३।१।२८ सुडामः ३।१।२९ ॥ इतितृतीयेप्रथमःपादः १ ॥ आपः ३।२।१ यटोच्च ३।२।२ हसेपः सेर्लोपः ३।२।३ टौसोरे ३।२।४ धिरी ३।२।५ औः ३।२।६ ङितो यट् ३।२।७ आम् ङेः ३।२।८ नियश्च ३।२।९ स्त्रियांय्वोः ३।२।१० धौ ह्रस्वः ३।२।११ ङितामट् ३।२।१२ ङेर्युधः ३।२।१३ इदुद्भ्याम् ३।२।१४ ओषु ३।२।१५ टानास्त्रियाम् ३।२।१६ एओ जसि ३।२।१७ धौ ३।२।१८ ङिति३।२।१९ ङस्य ३।२।२० ङे रौडित् ३।२।२१ ऋतौङःउः ३।२।२२ से रा ३।२।२३

धेरर् ३।२।२४ ङौ ३।२।२५ पंचसु ३।२।२६ स्तुरार् ३।२।२७ पुंसोऽसुङ् ३।२।२८ असंभवे कक्सौ ३।२।२९ त्रितोनुम् ३।२।३० वादीपोःशतुः ३।२।३१ अप्ययोनित्यम् ३।२।३२ अञ्चेः ३।२।३३ न्सम्म-हतौधौ दीर्घः शौ च ३।२।३४ नोपधायाः ३।२।३५ अत्वसोः सौ ३।२।३६ शसि ३।२।३७ नामि ३।२।३८ इना ३।२।३९ ॥ इतिअष्टाध्यायीतृतीयेद्वितीयःपादः ॥ त्रेरयङ् ३।३।१ ड्णः ३।३।२ अल्लोपः स्वरे ३।३।३ वेङ्योः ३।३।४ अञ्चेर्दीर्घश्च ३।३।५ तिरश्चादयः ३।३।६ षुर्णोणोऽनन्ते ३।३।७ अवृकुप्वान्तरेपि ३।३।८ क्लिलात्षः स क्रुतस्य ३।३।९ प्रादेश्चतथातौखुनमा ३।३।१० नपुंसकात्स्यामोर्लुक् ३।३।११ अतोऽम् ३।३।१२ श्त्वन्यादेः ३।३।१३ इमौ ३।३।१४ जश्शसोःशिः ३।३।१५नुमयमः ३।३।१६ नामिनः स्वरे ३।३।१७ अनडुहश्च ३।३।१८ अच्चास्न्थाशसादौ ३।३।१९ वसोर्व उः ३।३।२० श्वादेः ३।३।२१ ॥ इतिअष्टाध्यायीतृतीयाध्यायेतृतीयःपादः ३ ॥ आतोधातोर्लोपः ३।४।१ वा पथांटेः ३।४।२ इतोत्पञ्चसु ३।४।३ थो नुट् ३।४।४ आसौ ३।४।५ दिव औ ३।४।६ उरसे ३।४।७ चतुराम्शौ च ३।४।८ अनडुहश्च ३।४।९ धावम् ३।४।१० आरौ ३।४।११ आम्शासि ३।४।१२ ऐसख्युः ३।४।१३ सेर्डाधेः ३।४।१४ उशनसाम् ३।४।१५ य्वोर्द्धातोरियुवौ स्वरे ३।४।१६ असवर्णे ३।४।१७ स्त्रीभ्रुवोः ३।४।१८ वाम्शसि ३।४।१९ य्वौवा ३।४।२० नुधातोः ३।४।२१ नानर्य्योर्वः ३।४।२२ इतितृतीये-चतुर्थःपादः ४ ॥ इतिश्रीसरस्वतीदत्तवरदसारस्वतअष्टाध्यायीतृतीयोध्या-यःसमाप्तः ३ ॥ युष्मदस्मदोःषष्ठीचतुर्थीद्वितीयाभिस्तेमेवांनौवस्नसौ ४।१।१ त्वामा मा ४।१।२ नादौ ४।१।३ चादिभिश्च ४।१।४ त्वन्मदेकत्वे

४।१।५ युवावौ द्विवचने ४।१।६ आमौ ४।१।७ तवकममकौ युष्मा
कास्माकावणीनयोः ४।१।८ त्वमहंसिना ४।१।९ यूयंवयं जसा ४।१।
१० तुभ्यंमह्यंङ्या ४।१।११ तवममङसा ४।१।१२ ङसिभ्यसोःश्तु ।
४।१।१३ भ्यसूश्भ्यम् ४।१।१४ सामाकम्४ ।१।१५ आम्स्भौ ४।१।
१६ एटाङ्योः ४।१।१७ सखिपत्योरीक् ४।१।१८ ऋङे ४।१।१९
इतिचतुर्थेप्रथमःपादः १ ॥ त्रिचतुरोःस्त्रियां तिसृचतसृवत् ४।२।१ चलोः
पः ४।२।२ काप्यतः ४।२।३ ह्रस्वोवा ४।२।४ अन्यार्थे ४।२।५ गोः
४।२।६ नपुंसकस्य ४।२।७॥ इतिचतुर्थेद्वितीयःपादः २॥ त्यदादेष्टेरः
स्यादौ ४।३।१ इत्यधिकारः।दस्यमः ४।३।२ सामान्येऽदसःकःस्यादिव-
च्च ४।३।३ इत्यधिकारः।सौ सः ४।३।४ तः ४।४।५ इदमोऽयं पुंसि ४।
३।६ इत्यधिकारः।इयंस्त्रियाम् ४।३।७ सयः ४।३।८ अनटौसोः ४।३।
९ सेरौ ४।३।१० भिस्भिस् ४।३।११ मादू ४।३।१२ एदी बहुत्वे ४।
३।१३ भिदपाम् ४।३।१४ पदान्ते च ४।३।१५ इत्यधिकारः। वसांरसे
४।३।१६॥ इतिचतुर्थेतृतीयःपादः ३॥ धातोश्च झसे ४।४।१ नाम्नश्च
रसे ४।४।२ इत्यधिकारः।चोःकुः ४।४।३ दिशां ४।४।४ षोडः ४।४।
५ नाम्नोनोलोपश्धौ ४।४।६ संयोगान्तस्य लोपः ४।३।७ स्कोराद्योश्च
४।४।८ स्रोर्विसर्गः ४।४।९ अह्नः ४।४।१० रोरात्रिषु ४।४।११ दोषाम्
४।४।१२ मोनोधातोः ४।४।१३ होढः ४।४।१४ दादेर्घः ४।४।१५
दुहां वा ४।४।१६ नहोधः ४।४।१७ छशषराजादेःषः ४।४।१८ घ-
सादेः ४।४१९ षढोः कः से ४।४।२० सस्तोऽनपि ४।४।२१ दिपि
४।४।२२ सिपि वा ४।४।२३ दःसः ४।४।२४ खसे चपा झसानाम् ४।
४।२५ झबे जबाः ४।४।२६ वावसाने ४।४। २७ आदिजबानां झभां-

तस्य झवाः स्थ्वोः ४।४।२८ तथोः ४।१।२९ अव्ययाद्विभक्तेर्लुक् ४।४।३० नशब्दनिर्देशे ४।४।३१ समासप्रत्यययोः ४।४।३२ अलुक् क्वचित् ४।४।३३ अव्ययीभावात् ४।४।३४अतोऽमनतः ४।४।३५ वो टाङ्योः ४।४।३६ स नपुंसकम् ४।४।३७ एकत्वे द्विगुद्वंद्वौ ४।४।३८ इतिचतुर्थेचतुर्थःपादः ४॥ इतिश्रीसरस्वतीदत्तवरदसारस्वतअष्टाध्यायीचतुर्थोऽध्यायःसमाप्तः ४॥ लिंगार्थे प्रथमा ५।१।१ आमन्त्रणे च ५।१।२ अन्योक्ते ५।१।३ सिद्धिः ५।१।४ भोसः ५।१।५ इतिपंचमेप्रथमःपादः १॥ शेषाःकार्यैकर्तृसाधनयोर्दानपात्रेविश्लेषावधौसंवधआधारभावयोः ५।२।१ विनासहनमस्कृते निर्धारणे स्वाम्यादिभिश्च ५।२।२ कार्य्ये द्वितीया ५।२।३ विनादियोगे च ५।२।४ कालाध्वनोर्नैरंतर्य्ये ५।२।५ अधिपूर्वाणां शीङ्स्थासामाधारे ५।२।६ अभिनिपूर्वस्य विशेः ५।२।७ उपान्वध्याङ्पूर्वस्य वसः ५।२।८ इतिपंचमेद्वितीयःपादः २॥ कर्त्तरिकरणे च तृतीया ५।३।१ सहादियोगे च ५।३।२ इत्थं भावे ५।३।३ येनाङ्गविकारः ५।३।४ दानपात्रे संप्रदानकारके चतुर्थी ५।३।५ नमआदियोगे ५।३।६ क्रुध्यादियोगे च ५।३।७ तादर्थ्ये ५।३।८ विश्लेषावधौ पंचमी ५।३।९ ऋतआदियोगे च ५।३।१० क्यप्लोपेकर्मण्याधेरे च ५।३।११ भयहेतौ च ५।३।१२ जनिकर्त्तुः प्रकृतिः ५।३।१३॥ इतिपंचमेतृतीयःपादः ३ ॥ संबंधे षष्ठी ५।४।१ निर्धारणे च ५।४।२ अनादर्मीधिकेक्रियालक्षणे च ५।४।३ कर्तृकार्ययोरक्तादौ कृति ५।४।४ स्मृतौ च कार्ये ५।४।५ हेतुप्रयोगे च ५।४।६। आधारे सप्तमी ५।४।७ भावःक्रियालक्षणे तत्र ५।४।८ स्वाम्यादियोगेपि च ५।४।९ निमित्तात्कर्मयोगे ५।४।१० विषये च ५।४।११ ॥ इतिपंचमेचतुर्थःपादः ४ ॥

इतिश्रीसरस्वतीदत्तवरदसारस्वतअष्टाध्यायीपंचमोऽध्यायः ५ ॥ अपत्ये-ऽण् ६।१।१ ऋउरणि ६।१।२ वोऽन्यस्वरे ६।१।३ यस्य लोपः६।१।४ ईपि ६।१।५ ङिति टेः ६।१।६ नोवा ६।१।७ कार्यायेत् ६।१।८ आ-रै औ वृद्धिः ६।१।९ आदिस्वरस्यञ्णिति ६।१।१० क्वचिद्द्वयोः ६।१।११ नसंधिय्वोर्युट् च ६।१।१२ धातोर्नामिनः ६।१।१३ अतउपधायाः ६।१।१४ आतोयुक् ६।१।१५ हनोघत् ६।१।१६ हनोघ्ने ६।१।१७ रातीर्ञोपुक् ६।१।१८ मितांह्रस्वः ६।१।१९ अतइञ्ञऽनृषेः ६।१।२० ण्यायनणेपणणीयागर्गनडात्रिस्त्रीपितृष्वस्त्रादेः ६।१।२१ लुक्बहुत्वेक्व-चित्प्रत्ययस्य ६।१।२२ देवतेदमर्थे ६।१।२३णितोवा ६।१।२४ का-रकाक्रियायुक्ते ६।१।२५ केनेयेकाः ६।१।२६ त्यतनौ ६।१।२७ स्वार्थेपि ६।१।२८ वत्तुल्ये ६।१।२९ भावे तत्वयणः ६।१।३० लो-हितादेर्डिदिमन् ६।१।३१ ऋरः ६।१।३२ बहोर्लोपोभू च ६।१।३३ अस्त्यर्थेमतुः ६।१।३४ अइकौ मत्वर्थे ६।१।३५ मान्तोपधाद्व-लिनौ ६।१।३६ एतत्कियत्तञ्भ्यः परिमाणे वतुः ६।१।३७ यत्त-दोरा ६।१।३८ किमः कीर्यश्च ६।१।३९ आइश्चैतदोवा ६।१।४० अस्मायामेधास्त्रग्भ्यो विनिरामयाच्च ६।१।४१ वाचोग्मिनिः ६।१।४२ तुंदादेरिलः ६।१।४३ श्रद्धादेर्लुः ६।१।४४ औन्नत्ये दन्तादुरः ६।१।४५ आलाटौ कुत्सितभाषिणि ६।१।४६ ईषदपरिसमाप्तौ कल्पदेश्यदेशी-याः ६।१।४७ प्रशंसायां रूपः ६।१।४८ पाशः कुत्सायाम् ६।१।४९ भूतपूर्वे चरट् ६।१।५० प्राचुर्य्यविकारप्राधान्यादिषु मयट् ६।१।५१ तदधीतेवेत्यर्थेऽण् ६।१।५२ इतोजातार्थे ६।१।५३ तरतमेयस्त्विष्ठाः प्र-कर्षे ६।१।५४ ईपस्विष्टौ डितौ ६।१।५५ गुर्वादेरिष्ठेमनीयस्सुगरादि-

ष्ठलोपश्च ६।१।५६ ईलोपोज्याशब्दादीयसुः ६।१।५७ विन्वतोर्लुक् ६।१।५८ वहोरिष्टेयिः ६।१।५९ किमोन्ययादाख्याताच्चतरतमयो- राम् द्रव्यप्रकर्षे ६।१।६० परिमाणे दघ्नादयः ६।१।६१ द्वयोर्बहूनांचै- कस्यनिर्द्धारणेकिमादिभ्योडतरडतमौ ६।१।६२ संख्येयविशेषावधारणेद्वि- त्रिभ्यां तीयस्त्रेस्तृ च ६।१।६३ षष्कतिकतिपयचतुर्भ्यस्थट् ६।१।६४ चतुरोवेयौ च लोपः ६।१।६५ पञ्चादेर्मट् ६।१।६६ एकादशादेर्डट् प्राक्शतात् ६।१।६७ विंशतिस्तिलोपोडिति ६।१।६८ विंशत्यादेर्वा तमट् ६।१।६९ शतादेर्नित्यं तमट् ६।१।७० संख्यायाः प्रकारे धा ६।१।७१ द्वित्रिभ्यां डेधाधमुञो वा ६।१।७२ एकाद्धमुञ् वा ६।१। ७३ एकादाकिन्नसहाये ६।१।७४ एकस्य सकृदादेशश्च ६।१।७५ द्वि त्रिचतुर्भ्यस्त्रः ६।१।७६ क्रियाया आवृत्तौ कृत्वम् ६।१।७७ बह्वादेः शतादेश्चशम् ६।१।७८ संख्यैकवचनाभ्यां वीप्सायाम् ६।१।७९ तयडयडौ संख्याया अवयवे ६।१।८० स्त्रीपुंसाभ्यां नञ्स्नञौ ६।१।८१ शेषानिपा- त्याः कत्यादयः ६।१।८२॥ इतिषष्ठेप्रथमः पादः १॥ आबतः स्त्रियाम् ६।२।१ त्रणईप् ६।२।२ ईपतोल्लोपः ६।२।३ ष्त्रितः ६।२।४ नद्यादेः ६।२।५ अनंत्यवयोवाचिनः ६।२।६ इन्द्रादेरानीप् ६।२।७ पुंयोगे च ६।२।८ जातेरयोपधात् ६।२।९ स्वांगाद्वा ६।२।१० वोर्गुणात् ६ ।२।११ ऐ च मन्वादेः ६।२।१२ सवोरौ वा ६।२।१३ पत्न्यादयः ६ ।२।१४ इतोमनुष्यजातेरीप् ६।२।१५ उत ऊः ६।२।१६ यूनस्तिः ६।२।१७॥ इतिषष्ठेद्वितीयःपादः २ ॥ समासश्चान्वये नाम्नाम् ६।३।१ समाहारेऽतईप् द्विगुः ६।३।२ तश्चगुणः ६।३।३ संख्यापूर्वः ६।३।४

पूर्वेऽव्ययेऽव्ययीभावः ६।३।५ अवधारणार्थे यावति च ६।३।६ यथा सादृश्ये ६।३।७ अमादौ तत्पुरुषः ६।३।८ नञि ६।३।९ चार्थे द्वंद्वः ६।३।१० कर्मधारयस्तुल्यार्थे ६।३।११ आदेश्च ६।३।१२ ऋतोः ६।३।१३ बहुव्रीहिरन्यार्थे ६।३।१४ टाडकाः ६।३।१५ नञ्दुःसुभ्यः प्रजा-मेधयोरसुक् ६।३।१६ धर्मादन् ६।३।१७ धनुषोऽनङ् ६।३।१८ पुंवद्वा ६।३।१९। संख्यासु व्याघ्रादिपूर्वस्यपादशब्दस्याल्लोपः ६।३।२० टादावुक्तपुंस्कं पुम्वद्वा ६।३।२१ इतिषष्ठेतृतीयःपादः ३ ॥ प्रादिरुपसर्गः ६।४।१ प्राग्धातोः ६।४।२ नाम्नश्च कृत समासः ६।४।३ दिक्संख्ये संज्ञायाम् ६।४।४ ना ६।४।५ अन्स्वरे ६।४।६ सहादेः सादिः ६।४। चादिर्निपातः ६।४।८ तत्रादिर्विभक्त्यर्थे ६।४।९ सद्यादिः काले निपात्यते ६।४।१० तदव्ययम् ६।४।११ क्त्वाद्यंत्यं च ६।४।१२ इतिषष्ठेचतुर्थःपादः ४ ॥ इतिश्रीसरस्वतीदत्तवरदसारस्वतअष्टाध्यायीषष्ठोऽध्यायः ॥६ ॥ धातोः ७।१।१ वर्त्तमाने तिप् तस् अन्ति सिप् थस् थ मिप् वस् मस् ते आते अन्ते से आथे ध्वे ए वहे महे ७।१।२ विधिसंभावनयोःयात्यातम्।युस्।यास्।यातम्।यात।याम्।याव।याम। ईत ईयाताम् ईरन् ईथास् ईयाथाम् ईध्वम् ईय ईवहि ईमहि ७।१।३।आशीःप्रेरणयोः तुप् ताम् अन्तु हि तम् त आनिप् आवप् आमप् त आताम् अन्ताम् स्व आथाम् ध्वम् ऐप् आवहैप् आमहैप् ७।१।४ अनद्यतनेऽतीते। दिप् ताम् अन्। सिप् तम् त अमिप् व म तन् आतां अंत थास् आथाम् ध्वं इवहि इमहि ७।१।५ परोक्षे णप् अतुस् उस् थप् अथुस् अणप् व म ए आते इरे से आथे ध्वे ए वहे महे ७।१।६ आशिषि यात् यास्ताम् यासुस् यास्

यास्तम् यास्त यासम् यास्व यास्म सीष्ट सीयास्ताम् सीरन् सीष्ठास् सीयाथां सीध्वं सीय सीवहि सीमहि ७।१।७ श्वस्तने । ता तारौ तारस् तासि तास्थ तास्मि तास्वस् तास्मस् । ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे ७।१।८ आद्भुवि कर्मणि ७।१।९ कर्त्तरि पंच ७।१।१० यक् चतुर्षु ७।१।११ अप् कर्त्तरि ७।१।१२ अदादेर्लुक् ७।१।१३ ह्वादेर्द्विश्च ७।१।१४ दिवादेर्यः ७।१।१५ स्वादेर्नुः ७।१।१६ रुधादेर्नम् ७।१।१७ तनादेरुप् ७।१।१८ तुदादेरः ७।१।१९ ना क्र्यादेः ७।१।२० हसादानहौ ७।१।२१ ॥ इतिसप्तमेप्रथमः पादः ६।१।७१ [illegible] द्वित्रिभ्यां ७।२।१ हठपौनःपुन्ययोःप्रथमपुरुषैकवचनस्य लो-
१ ॥ सप्तमे [illegible]
ण्मध्यमपुरुषैकवचनांतता निपात्यते ७।२।२ त्यादौ भविष्यति स्यप् ७।२।३ दिवादावट् ७।२।४ स्वरादेः ७।२।५ स्यप् क्रियातिक्रमे ७।२।६ भूतेसिः ७।२।७ इङोणादौ गाङ्लुङ्लृङोर्वागीगुणाभावश्च ७।२।८ णित्ये ७।२।९ अनिटोनामिवतः ७।२।१० ह्म्यंतक्षणश्वसजागृणिश्व्येदितां सेटिसौ न वृद्धिः ७।२।११ जनिवध्योर्न ७।२।१२ हसषान्तात्सक् ७।२।१३ ञेरङ्द्विश्च ७।२।१४ लित्पुषादेर्ङः ७।२।१५ इरितो वा ७।२।१६ नव पं ७।२।१७ व्याङ्पर्युपेभ्योरमः ७।२।१८ सम्करोतेर्भूषणे सुट् ७।२।१९ पेराण्यात् ७।२।२० नाम्निचयुष्मदि चास्मदिचभागैः प्रथममध्यमोत्तमाः ७।२।२१ अव्यवधानात्पुरुषविशेषः ७।२।२२ इतिसप्तमेद्वितीयःपादः ॥ २ ॥ इण् तन्यः कर्त्तरि ७।३।१ लोपः ७।३।२ दिस्योर्हसात् ७।३।३ अदुदादेरट् ७।३।४ अस्तेरीट् ७।३।५ सेः ७।३।६ ह्रस्वाज्झसे ७।३।७ इटईटि ७।३।९ दादेः पे७।३।१०

मेऽटः ७।३।११ ओर्वाहेः ७।३।१२ अतः ७।३।१३ अदे ७।३।१४ ञ्मोरा ७।३।१५ आदाथइः ७।३।१६ या ७।३।१७ यामि यम् ७।३।१८ युस इट् ७।३।१९ ओर्म्मोर्वा ७।३।२० कृञोये ७।३।२१ ङित्यदुः ७।३।२२ तातः ७।३।२३ इहसे ७।३।२४ द्वेस्तौ ७।३।२५ नमसोऽस्य ७।३।२६ सि सः ७।३।२७ आतोन्ताऽदनतः ७।३।२८ अन उस् ७।३।२९ द्वेः ७।३।३० स्याविदः ७।३।३१ अज्ञादेः ७।३।३२ उस्यालोपः ७।३।३३ दाहे ७।३।३४ आदनुदात्तङितः ७।३।३५ निविशादेः ७।३।३६ विपराभ्यां जेः ७।३।३७ समोगमादिभ्यश्च ७।३।३८ समवप्रोपविभ्यःस्थः ७।३।३९ आङोदोनास्य विहारणे ७।३।४० क्रीड आङ्नुसंपरिभ्यश्च ७।३।४१ उद्विभ्यां तपः ७।३।४२ आङोयमहनः ७।३।४३ उदश्चरस्त्यागे ७।३।४४ समस्तृतीयायुक्ताश्च ७।३।४५ व्यवपरिभ्यः क्रियः ७।३।४६ शप उपालंभे ७।३।४७ ज्ञाश्रुस्मृदृशांसांतानाम् ७।३।४८ कर्मव्यतीहारेऽन्मत्राहिंसादेः ७।३।४९ ञित्स्वरितेत उभे ७।३।५० परतोन्यत् ७।३।५१ अपितादिर्ङित् ७।३।५२ णादिः कित् ७।३।५३ ऋसंयोगान्न ७।३।५४ क्त्वा सेट् ७।३।५५ क्तोवा ७।३।५६ अतिशयेहसादेर्यङ् ७।३।५७ इच्छायामात्मनः स साचेत् ७।३।५८ गुऽभ्यः ७।३।५९ आपः ७।३।६० अशेरतया वा ७।३।६१ आप्नोतेरी ७।३।६२ ॥ इतिसप्तमेतृयीयः पादः ॥ ३ ॥ नाम्नोय ईचास्य ७।४।१ अभूततद्भावे कृभ्वस्तियोगेच्चिः ७।४।२ च्वौदीर्घः ७।४।३ आचार उपमानात् ७।४।४ कर्त्तुर्यङ् ७।४।५ ञिडित्करणे ७।४।६ पृथ्वादेरः ७।४।७। धातोः प्रेरणे ७।४।८ चुरादेः ७।४।९ स धातुः ७।४।१० भ्वादिः

७।४।११ से दीर्घः ७।४।१२ य्वोर्विंहसे ७।४।१३ ये ७।४।१४ दादे रिः ७।४।१५ शासेः ७।४।१६ ऋप्रोः ७।४।१७ ऋतोरिङ् ७।४।१८ अ यकि ७।४।१९ पादादौ ७।४।२० दादेरेः ७।४।२१ स्वस्वरादिर्द्धि-रद्धिः ७।४।२२। स्वरादेः परः ७।४।२३ पूर्वस्य हसादिः शेषः ७। ४।२४ शसात्स्वपाः ७।४।२५ कुहोश्चुः ७।४।२६ झपानांजबाश्चपाः ७।४।२७ रः ७।४।२८ ह्रस्वः ७।४।२९ यस्से ७।४।३० भृञ्जांलुकि ७।४।३१ निजां गुणः ७।४।३२ द्वेः स्वरेऽपिपिति नोपधायाः ७।४।३३ यङि ७।४।३४ आतः ७।४।३५ ञमजपां नुक् ७।४।३६ रीगृदुपधस्य ७।४।३७ पदांनीक् ७।४।३८ अङि लघौ ह्रस्व उपधायाः ७।४।३९ लघोर्दीर्घः ७।४।४० नरितः ७।४।४१ आम्वोर्णादौ ७।४।४२ द्विश्च ७।४।४३ नुगशाम् ७।४।४४ लोपः पचांकित्येचास्य ७।४।४५ राजादेर्वा ७।४।४६ तृफलादेः ७।४।४७ ऋसंयोगान्न ७।४।४८ दांहो ७।४।४९ इस्से ७।४।५० झसाद्धिर्हे ७।४।५१ हंत्यस्तिशास्तीनांप्रकृतिभिरित्यद्धि-कारः ७।४।५२ जह्येधि शाधिः७।४।५३ ईर्वाहौ ७।४।५४ गुणः ७।४। ५५ अरेदोनासिनो गुणः ७।४।५६ नूपः ७।४।५७ शीङः सर्वत्र ७।४।५८ वित्तेरतोरुट् ७।४।५९ उपधाया लघोः ७।४।६० अर्त्तिसंयोगाद्योः ७। ४।६१ नाऽनिरिसे ७।४।६२ सिस्योः ७।४।६३ उः ७।४।६४ क्ङित्य-ध्युसि ७।४।६५ नोलोपः ७।४।६६ नमः ७।४।६७ गमांस्वरे ७।४।६८ आतोऽनपि ७।४।६९ यतः ७।४।७० ञेः ७।४।७१ य्योः ७।४।७२ संध्यक्षराणामा ७।४।७३ न व्येञोलिटि ७।४।७४ तनोतेर्वा ७।४।७५ वेञोवयोऽनपि ७।४।७६ आदेः ष्णः स्नः ७।४।७७ विदोनवानां ति-बादीनां णवादिर्नवकोवा ७।४।७८ ब्रुवआहश्च पञ्चानाम् ७।४।७९ अवा-

दावीपितित्स्मि ७।४।८० तुपुरुणस्तुभ्यः ७।४।८१ ओरौ ७।४।८२ गमां छः ७।४।८३ दृशादेः पश्यादिः ७।४।८४ ज्ञाजनोर्जा ७।४।८५ शदेः शित् ७।४।८६ श्रुवः शृ च ७।४।८७ शुचः शूद्रे ७।४।८८ अदोजघुः ७।४।८९ प्यायः पी ७।४।९० स्फाय्यः स्फी ७।४।९१ दधातेर्हिः ७।४।९२ प्वादेर्ह्रस्वः ७।४।९३ मुचादेर्नुम् ७।४।९४ खिति पदस्य ७।४।९५ इदितः ७।४।९६ उरसः सलोपश्च ७।४।९७ उदः स्थादेः ७।४।९८ शमां दीर्घः ७।४।९९ पूर्वस्य ङितिझसेधः ७।४।१०० लोपस्त्वनुदात्ततनाम् ७।४।१०१ ऋडरइर् ७।४।१०२ रुर् ७।४।१०३ सिसतासीस्यपामिट् ७।४।१०४ रुदादेश्चतुर्णांह्वसादेः ७।४।१०५ क्तः ७।४।१०६ हनृतः स्यपः ७।४।१०७ ऊदितोवा ७।४।१०८ ऊदितःक्त्वा ७।४।१०९ वेट्थपः ७।४।११० पतोवेट् ७।४।१११ नैकस्वरादनुदात्तात् ७।४।११२ वस्ते ७।४।११३ इतः ७।४।११४ आदिततः ७।४।११५ ईशिर्विरक्रयेर्नेट् गुणश्च ७।४।११६ क्रादेर्णादेः ७।४।११७ कासादिप्रत्ययांतादाम् क्रसभूपरः ७।४।११८ भुवोवुक् ७।४।११९ इटोग्रहाम् ७।४।१२० नामिनोऽचतुर्णांधौ ढः ७।४।१२१ इतिसप्तमेचतुर्थःपादः ४ ॥ इति श्रीसरस्वतीवरदसारस्वतअष्टाध्यायीसप्तमोऽध्यायः ७ ॥ धातोः कृत् ८।१।१ इत्यधिकारः । कृत्कर्त्तरि ।८।१।२। तृवुणौ ।८।१।३ क्तः ८।१।४ नाम्युपधात्कः ।८।१।५ पचिनंदिग्रहादेरयुणिनः ८।१।६ वचादेरस् ८।१।७ राजादेरन् ८।१।८ दशादेः शः ।८।१।९ शिच्चतुर्वत् ।८।१।१०। ज्वलादेर्णः ८।१।११ कार्येऽण् ८।१।१२ आतोङः ८।१।१३ नाम्नि च ८।१।१४ अटौ ८।१।१५ इखखि ८।१।१६ एजां खश् ८।१।१७

ल्युट् करणे ८।१।१८ भजां विण् ८।१।१९ इत्यष्टमेप्रथमः पादः १ ॥ आतोमनिप्क्वनिप्वनिपः ८।२।१ क्विप् सर्वस्मात् ८।२।२ मोनः ८।२।३ इशेः पृक्सकौ चोपमाने कार्ये ८।२।४ असर्वादेः ८।२।५ किमिदंमः कीशौ ८।२।६ अदसोऽमू ८।२।७ सामान्ये चिदादिः ८।२।८ कः स्यादिवत् ८।२।९ तदधीनकात्र्त्र्यर्ययोर्वासात् ८।२।१० णिनि रतीते ८।२।११ क्विप्वनिप्डाः८।२।१२ क्तक्तवतू ८।२।१३ ञीतां क्तोवर्त्तमानेपि ८।२।१४ पचोवः ८।२।१५ क्वसुकानौ णवेवत् ८।२।१६ शतृशानौ ८।२।१७ तिसेवत् क्रियायाम् ८।२।१८ मुगानेतः ८।२।१९ विदेर्वावसुः८।२।२० आसेरानईः ८।२।२१ शीले तृन् ८।२।२२ इक्षु स्रुक्क ८।२।२३ षाकोकणः ८।२।२४ यङ ऊकः ८।२।२५ लुकि ८।२।२६ वान्यत्र ८।२।२७ अनपि च हसात् ८।२।२८ लुकि सति पितः त्स्मोवेट् ८।२।२९ ऋदन्तानामृदुपधानां पूर्वस्य रुग्रिग्रीगागमाः ८।२।३० आद्दतःकिर्द्धिश्च भूते ८।२।३१ लुकिसेति २।३२ घसादेः क्मरः ८।२।३३ भासादेर्घुरः ८।२।३४। छिदिभिदिविदेः कुरः ८।२।३५ इतिशीलाधिकारः ॥ इत्यष्टमेद्वितीयःपादः २ ॥ सद्दोणादयः ८।३।१ उणादयोऽपरिमिताः प्रयोगमनुसृत्य प्रयोक्तव्याः ८।३।२ तुम् तदर्थायां भविष्यति ८।३।३ घञ भावे ८।३।४ युट् ८।३।५ संज्ञायामकर्त्तरि च ८।३।६। स्वरादः ८।३।७ मदम् ८।३।८ ट्वितोऽथुः ८।३।९ ड्वितस्त्रिमक् तत्कृते ८।३।१० नंकी ८।३।११ क्तोनपुंसके ८।३।१२ युट् च ८।३।१३। सकेसाधनाधारयोश्च ८।३।१४ भावकार्ययोः ८।३।१५ गत्यर्थादकर्मकात्कर्तरि क्तः ८।३।१६ ईषद्दुःसुषु खल् ८।३।१७ कर्तृकर्मणोश्च ८।३।१८ ॥ इत्यष्टमेतृतीयःपादः ३ ॥ तव्यानी-

यौ ८।४।१ स्वराद्यः ८।४।२ ईचातः ८।४।३ पुशकात् ८।४।४। ऋहसाद्यण् ८।४।५ ओरावश्यके।८।४।६। ऋदुपधात् क्यप् ८।४।७ ह्रस्वाच्च ।८।४।८ तत्कालेपि ८।४।९ क्यपिञेर्गुणः ८।४।१० स्त्रियां यजां भावे ८।४।११ मूर्त्तौ घनः ८।४।१२ सौकार्य्येकेलिः ८।४।१३ अलंखल्वोः प्रतिषेधे क्त्वा ८।४।१४ उदीतः क्त्वा वेट् ८।४।१५ पूर्वकाले समानकर्त्तृके धातौ प्रयुज्यमाने ८।४।१६ समासे ८।४।१७ क्तिः ८।४।१८ षिद्भिदामङ् ८।४।१९। गुरोर्हसात् ८।४।२० चजोः कगौ घिति ८।४।२१। ह्रस्वस्य पिति कृति तुक् ८।४।२२ शिति चतुर्वत् ८।४।२३ उदोतोर्यः स्वरवत् ८।४।२४ ढिढोलोपोदीर्घश्च ।८।४।२५ सहिवहोरोदवर्णस्य ८।४।२६ वेः ८।४।२७ युवोरनाकौ ८।४।२८ रारोझसेद्दशाम् ८।४।२९। यजां यवराणां दौतःसंप्रसारणं किति ८।४।३० ग्रहांङ्किति च ८।४।३१ णबादौ पूर्वस्य ८।४।३२ दोरते ८।४।३३ स्वरातोवा ८।४।३४ स्थामी ८।४।३५ दुस्तस्यनोदश्च ८।४।३६ ल्वाद्योदितश्च ८।४।३७ त्राणाद्यानिपात्यंते ८।४।३८ अत्रभवतत्रभवच्छष्टौ पूज्यार्थे ८।४।३९। क्षय्यजय्यौ शक्यार्थे ८।४।४० उर्य्युरर्य्यंगीकरणे ८।४।४१ पौनःपुन्येणम् ८।४।४२ पदंद्विश्च ८।४।४३ कथमादिषु स्वार्थे कृञोणम् । ८।४।४४ लोकाच्छेषस्य सिद्धिः ८।४।४५ ॥ इत्यष्टमेचतुर्थःपादः ४ ॥

इतिश्रीअनुभूतिस्वरूपाचार्यपूज्यपादशिष्यनिजस्वरूपाचार्यलिखितेसरस्वतीदत्तवरदसारस्वतीयअष्टाध्यायीकृत्संज्ञिकेऽष्टमोऽध्यायः ॥ ८ ॥

संज्ञाचपरिभाषाचविधिर्नियमएवच । अतिदेशोऽधिकारश्चषड्विधंसूत्रलक्षणम् ॥ १ ॥ सूत्रसप्तशतंयस्मैददौसाक्षात्सरस्वती । अनुभूतिस्वरूपायतस्मैश्रीगुरवेनमः ॥ २ ॥ इदंअष्टाध्यायीप्रकरणम् समाप्तम् ॥

अथ

# ॥ सूत्राणामकारादिकोशः ॥

श्री खरतरगच्छीय ज्ञान मन्दिर, जयपुर

इमम् सूत्राणामकारादिकोशं व्याकरणशास्त्ररसज्ञाः निखिलाय स्वहृदयाह्लादने स्थिरीकरिष्यन्तीत्याशास्महे येन सफलीभविष्यत्य मम प्रयासः ॥

**न्यग्रोध ( वलसाड ) पुरनिवासी शास्त्री**

**अंबारामशर्मा ।**

---

**सदचरजपजभदहदशगृभ्यो धात्वर्थगर्हायामेव यङ्** । ८ । गर्हितं लुम्पतीति लोलुप्यते । सासद्यते ॥ **ञमजपां नुक्** । ९ । ञमान्तस्य जपादीनां च पूर्वस्य नुगागमो भवति यङि लुकि च सति ॥ जप् जभ् दह् दंश् भञ्ज् पश् एते जपादयः ॥ जङ्गम्यते । बम्भ्रम्यते ॥ अझसेऽप्यनुस्वारः । आदेशिना आदेशो निर्दिश्यते । यंयम्यते । कुण शब्दे । चङ्कुण्यते । तन्तन्यते । जप मानसे च । जपतीति जञ्जप्यते । जभ गात्रविनामे । जभतीति जञ्जभ्यते । दह भस्मीकरणे । दन्दह्यते । नो लोपः ( प्र० १ सू० ६१ ) दन्दश्यते । बम्भज्यते । पश्यतीति पम्पश्यते । पश् बाधनग्रन्थनयोः ॥ **चरफलोरुच्चास्य** । १० । अनयोर्यङि लुकि च सति पूर्वस्य नुगागमो भवति पूर्वात्परस्य अकारस्य उकारः ॥ चञ्चूर्यते । फल निष्पत्तौ । पम्फुल्यते ॥ **वलयान्तस्य वा नुक्** । ११ । मव स्थौल्ये । मंमव्यते-मामव्यते । चल कम्पने । चञ्चल्यते चाचल्यते । दयङ् दाने दन्दय्यते-दादय्यते ॥ **रीगृदुपधस्य** । १२ । ऋकारोपधस्य धातोर्यङि सति पूर्वस्य रीगागमो भवति ॥ कित्वादाकाराभावः ॥ नृती गात्रविक्षेपे । अतिशयेन नृत्यति नरीनृत्यते नटः ॥ **अत्र णत्वाभावो वाच्यः** । १३ । वृतु वर्तने । वरीवृत्यते । ग्रह उपादाने । जरीगृह्यते ॥ **ऋत्वतो रीग्वाच्यः** । १४ । ओव्रश्चू छेदने । वरीवृश्च्यते । प्रच्छ ज्ञीप्सायाम् । परीपृच्छ्यते । कृपू सामर्थ्ये । कृपो रो लः ( प्र० २ सू० २० ) ऋल । चरीकॢप्यते ॥ **वशोर्यङि न संप्रसारणम्** । १५ । वावश्यते ॥ **पदस्रंसुध्वंसुभ्रंसुदंशुकसवञ्चुपतस्कन्दां यङि लुकि च सति पूर्वस्य नुगागमो वाच्यः** । १६ । पनीपद्यते । नो लोपः (प्र० १ सू० ६१) स्रंसु ध्वंसु अधःपतने । सनीस्रस्यते । दनीध्वस्यते बनी-